नामपीन्दुकरकन्दलीनां कमलवनीमीलनं कलङ्कस्थानम् (द)। (विमृश्य)। का गतिः (ध)—

कूर्मराजभुजगाधिपगोत्र-
ग्रावदिक्करिभिरेकधुरीणाः।
मां प्रसूय कथमस्तु विगीतो?
हा! परार्थविमुखो रघुवंशः॥ १९॥

विश्वामित्रः। (सस्मितम्)। राजर्षे! ममकारो हि राजपुत्रेषु राज्ञामुपलालनक्लेशाय केवलम्, उपयोगस्तु प्रजानाम् (न)। यथैतत्—

---

(द) वा अथवा। निःश्रेषेति।—निःश्रेषः परिपूर्णः, निरतिशय इत्यर्थः, य आनन्दः तस्य निःस्यन्दिनीनां वर्षिणीनाम्। इन्दुकरकन्दलीनां चन्द्रकिरणनिचयानाम्। कमलवनीनिमीलनं क्षुद्रपद्मवनसङ्कोचन, पद्मसङ्कोचसाधनमित्यर्थः, कलङ्कस्थानं कलङ्ककरमित्यर्थः। सकलपापदुःखहरस्य मदीयदुःखगमनं जगदानन्दिनश्चन्द्रस्य पद्मनिमीलनमिवेति तात्पर्यम्।

(ध) गतिः उपायः।

कूर्मेति।—कूर्मराजः कमठपतिः, पृष्ठे सागर-वनमण्डितसप्तद्वीपवसुन्धराधारक इति भावः, भुजगाधिपः वासुकिनागः, शिरसि पृथ्वीधारणकर्त्ता इति भावः, गोत्रग्रावाणः कुलपर्वताः, दिक्करिणः दिग्गजाः तैः, एकधुरीणः सम धुरन्धराः, पृथिव्याः भारवहनशीला इत्यर्थः, रघुवंशः मां प्रसूय कथं केन प्रकारेण, परार्थविमुखः परकार्यसाधने पराङ्मुखः सन्, विगीतः निन्दितः, अस्तु? भवतु? हा! इति खेदे; कूर्मराजादयः सदैव तत्तद्वलम्बनरूपकार्यकारित्वेन यथा परार्थसाधनपराः, रघुवंशोऽपि तथा, किन्तु यदि रामप्रदानेऽहं पराङ्मुखो भवेयं, तदा रघुवंशे मयैव कलङ्कः पातितः स्यादिति भावः॥ १९॥

(न) ममकारः ममत्वबुद्धिरित्यर्थः। ममेत्यव्ययम्। उपलालनेति।—उपलालनं सन्तर्पणेन शरीरपोषणं, तेन क्लेशः तस्मै; यद्वा—उपलालने लालने पोषणे, रक्षणवर्द्धने इत्यर्थः, यः क्लेशः कष्टं तस्मै। उपयोगः उपकारः। राज्ञां ममत्वबुद्ध्या निजपुत्रपोषणादिकं केवलं क्लेशकरं, न तु किञ्चिदपि उपकारकं, परन्तु भाविप्रजानां सुखविधानार्थमिति भावः।

कष्टा वैधव्यथा कष्टो नित्यमुद्वहनक्लमः।
श्रवणानामलङ्कारः कपोलस्य तु कुण्डलम्॥ ४०॥

दशरथ। भगवन्! परमनुगृहीता वयमेवं तत्रभवता सम्भाव्यमानाः (प); किं पुनरकृतास्त्रः चीरकण्ठो (फ) वत्सोऽयमिति मुग्धोऽस्मि (ब)।

विश्वामित्रः। (विहस्य)। सखे! तत्रभवन्तं मैत्रावरुणिमृषिं पुरोधाय चरितब्रह्मचर्य्यव्रतस्य (भ) धनुर्वेदसंस्कारास्तावदस्य कृशाश्वप्रसादादस्मास्वायतन्ते (म)।

दशरथः। (सविनयोपरोधम्)। भगवन्! उच्छ्वसितमपि (य) रघुराजबीजिनां त्वदायत्तमेव, किमुत कार्मुकविद्यासम्प्रदायः। अङ्ग, सहस्रकिरणकुलैकपक्षपातेनैव (र) सहस्रं वत्सरान्

दृष्टान्तेनैतत् समर्थयति, कष्टेति।—श्रवणानां श्रोत्राणां, वैधव्यथा वेधजनिता पीडा, कुण्डलधारणार्थमिति शेष, कष्टा क्लेशदायिनी, तथा नित्यं सततम्, उद्वहने धारणे, यः क्लमः क्लान्तः, परिश्रम इत्यर्थः, सोऽपि कष्टः, तु किन्तु, कुण्डलं कर्णभूषणं, कपोलस्य गण्डदेशस्य, अलङ्कारः शोभाजनकमित्यर्थः॥ ४०॥

(प) सम्भाव्यमाना सादरमभ्यर्थ्यमाना इत्यर्थः।

(फ) किं पुनः किन्तु इत्यर्थः। अकृतास्त्रः अशिक्षितधनुर्वेद इत्यर्थः। चीरकण्ठः दुग्धपायी, दुग्धपोष्य इति यावत्।

(ब) मुग्धः मूढः, किंकर्त्तव्यविमूढ इति यावत्।

(भ) पुरोधाय पुरोहितं कृत्वा। चरितेति।—चरितम् अनुष्ठितं, ब्रह्मचर्य्यव्रतं येन तथाभूतस्य, वसिष्ठेनोपनीतस्येति भावः।

(म) कृशाश्वस्य मम पूर्व्वप्रपितामहस्य, धनुर्वेदोपदेष्टुः गुरोरिति भावः, प्रसादात् अनुग्रहात्। आयतन्ते आयत्ताः इत्यर्थः, धनुर्वेदसंस्कारो मयैवास्य सम्पादनीय इति भावः।

(य) उच्छ्वसितं जीवनम्। रघुराजेति।—रघुराजः बीजी आदिपुरुषः प्रधानपुरुषो वा येषां तथोक्तानां रघुवंशीयानामित्यर्थः।

(र) अङ्ग मन्ये। सहस्रेति।—सहस्रकिरणस्य सूर्य्यस्य, कुलं वंशः, तस्मिन् एकः अद्वितीयः, पक्षपातः स्नेहः तेन।

भगवन्तं कृशाश्वमुपासीनो दिव्यास्त्रमन्त्रोपनिषदमध्यगीष्ठाः (ल)।

विश्वामित्रः। अलं च ते रामभद्रेऽपि बालोऽयमित्यलीकसम्भावनया (व); दिवस्पृथिव्योस्तिमिरतिरस्करिणीं तरणिरणुतरोऽपि तेजसा तिरस्करोति (श)।

दशरथः। (सस्मितम्)। भगवन्! कुशिकवंशकेतो! कस्य तलिनी (ष) तादृशी जिह्वा, यस्त्वामपि ब्रुवाणमधरोत्तरेणाभिसन्धत्ते? (स) (अपवार्य)। (ह) वामदेव! एवमत्रभवान् कौशिको ब्रवीति।

वामदेवः। राजर्षे! किमत्र प्रष्टव्या वयम्?—

कौशिकोऽर्थी भवान् दाता रक्षणीयो महाक्रतुः।
रक्षिता रामभद्रश्चेदनुमन्यामहे वयम्॥ ४१॥

(ल) उपासीनः आराधयन्। दिव्यास्त्रेति।—दिव्यानि अस्त्राणि तेषां मन्त्रोपनिषदं मन्त्ररहस्यम्। अध्यगीष्ठाः अधीतवानसीत्यर्थः।

(व) बालोऽयं शिशुरयम्। अलीकसम्भावनया वृथामननेन, मिथ्याशङ्कयेत्यर्थः।

(श) तरणिः सूर्यः. "द्युमणिस्तरणिर्मित्रः" इति सूर्यपर्याये अमरः। अणुतरोऽपि अतिक्षुद्रोऽपि, तेजसा किरणेन प्रतापेन च, दिवस्पृथिव्योः द्यावा-भूम्योः, तिमिरमेव अन्धकारमेव, तिरस्करिणी जवनिका तां, तिरस्करोति अपनयति, निरस्यतीत्यर्थः।

(ष) तलिनी स्वच्छा, *परिष्कृतेति यावत्, "तलिनं विरले स्तोके स्वच्छेऽपि वाच्यलिङ्गकम्" इति विश्वः।

(स) अधरोत्तरेण अधरः वादः, उत्तरः प्रतिवादः तेन वादप्रतिवादेनेत्यर्थः। यद्वा—अधरोत्तरेण स्वल्पमहता, स्वल्पार्थकेन महार्थकेन वा वाक्प्रपञ्चेनेति भावः। अभिसन्धत्ते बाधते, पराजयते इति यावत्।

(ह) अपवार्य, "रहस्यन्तु यदन्यस्य परावृत्य प्रकाश्यते। नाट्यधर्मवशाद्योगात् श्रुतं तदपवारितम्॥" इति लक्षणोक्तमपवारितं कृत्वा, अन्यतो मुखं परावृत्येत्यर्थः।

कौशिक इति।—कौशिकः विश्वामित्रः, अर्थी याचकः, भवान् दाता, महाक्रतुः

अपि च—

जगतीभारखिन्नानां विश्रामो भवतामयम्।
यत् यथाकामसम्पत्ति-प्रीतार्थिमुखदर्शनम् ॥ ४२ ॥

किं च विशेषेण—

पूरयितुमर्थिकामान् मैत्रावरुणेन गोत्रगुरुणा ते।
सन्दिशता सन्दिष्टः समाधिदृष्टोऽयमेवार्थः ॥ ४३ ॥

दशरथः। वामदेव ! एवमेतत्—

ध्यानमयदृष्टिपातप्रमुषितकालाध्वविप्रकर्षेषु।
विषयेषु नैष्ठिकानां सर्वपथीना मतिः क्रमते ॥ ४४ ॥

( विस्मय )।

---

महाशयाः, रघवीय, चेत् यदि, रामभद्रः रक्षिता रक्षाकर्त्ता, यशस्वीति भावः, भवेदिति शेषः, तदा वयम् अनुमन्यामहे अनुमोदामहे। अनुष्टुप् वृत्तम् ॥ ४१ ॥

जगतीति।—जगत्याः पृथिव्याः, भारेण पालनरूपकार्य्यातिशयेन, खिन्नानां क्लिष्टानां, श्रान्तानामित्यर्थः, भवतां भवादृशानां भूपालानामित्यर्थः, अयम् एषः एव, विश्रामः श्रान्तिदूरीकरणं, श्रमापनोदनोपाय इति यावत्, यत् कामम् अभिलषितमनतिक्रम्य इति यथाकामं प्रार्थनाऽनुरूपं द्रव्यं, तस्य सम्पत्त्या लाभेन, प्रीतानां हृष्टानाम्, अर्थिनां याचकानां, मुखदर्शनम्, अभिलाषानुरूपधनप्राप्त्या याचकानां प्रफुल्लमुखदर्शनजनितानन्दानुभव एव भवतां चित्तविनोदनोपाय इति निष्कर्षः। अनुष्टुप् वृत्तम् ॥ ४२ ॥

पूरयितुमिति।—अर्थिनां याचकानां, कामान् अभिलाषान्, पूरयितुं सफलयितुं, सन्दिशता वाचिकं प्रेषयता, ते तव, गोत्रगुरुणा कुलाचार्य्येण, मैत्रावरुणेन वशिष्ठेन, अयमेवार्थः विश्रामकार्य्य दानप्रदानरूपो विषय इत्यर्थः, समाधिदृष्टः योगबलेन प्रत्यक्षीकृतः, अत एव सन्दिष्टः सम्मुखेन वाचिकतया प्रेषित इत्यर्थः। आर्य्या वृत्तम् ॥ ४३ ॥

ध्यानेति।—नैष्ठिकानां निष्ठा उत्कर्षः, तत्र भवाः नैष्ठिकाः तेषाम् उत्कर्षशालिनां, तपःविद्या उत्कर्षं प्राप्तानामित्यर्थः; निष्ठा व्रतं वा प्रयोजनमेषां नैष्ठिकानां व्रतपराणां, यम-नियमादिना सिद्धिं प्राप्तानामित्यर्थः, "निष्ठोत्कर्ष-व्यवस्थयोः। क्लेशे निष्पत्तौ नाशेऽन्ते निर्वाहे याचने व्रते" इति हारावली; सर्वपथीना सर्वमार्गसञ्चारिणी, सर्वतोमुखीत्यर्थः; मतिः बुद्धिः, ध्यानबलेन चित्तस्य बाह्यविषयविमुखी

क्रियाणां रक्षार्थे दशरथमुपस्थाय विमुखे
मुनौ विश्वामित्रे भगवति गते सम्प्रति गृहान्।
तपोलेशक्लेशादुपशमितविघ्नप्रतिभये
प्रवृत्ते यष्टुं वा रघुकुलकथैवास्तमयते ॥ ४५ ॥

(मुनिं प्रति)। जगद्गुरो ! गाधिनन्दन !—

त्वं चेद्दीक्षिष्यमाणो मे रामभद्रं प्रतीक्षसे।
ततः पतिव्रतावृत्तमियं चरतु मेदिनी ॥ ४६ ॥

---

रचनात्मकेन, दृष्टिपातेन ज्ञानयोगेनेत्यर्थः, प्रकर्षेण अत्यर्थं, मुषितः अपहृतः, निराकृत इत्यर्थः, कालस्य अतीतानागतरूपस्य, अध्वनः मार्गस्य च, विप्रकर्षः दूरत्वं येषां तथाभूतेषु, विषयेषु वस्तुषु, क्रमते प्रसरति, योगबलेन सर्वमवगच्छतीत्यर्थः। आर्य्या वृत्तम् ॥ ४४ ॥

क्रियाणामिति।—क्रियाणां यज्ञानामिति यावत्, रक्षार्थे रक्षणाय, दशरथम् उपस्थाय उपगम्य, दशरथसमीपमागत्येत्यर्थः, भगवति मुनौ विश्वामित्रे विमुखे पराङ्मुखे, असफलकामे इति भावः, गृहान् आश्रमान्, गते प्रस्थिते, तथा तपोलेशस्य किञ्चिन्मात्रतपसः, क्लेशात् व्ययात्, यद्वा—तपसि तपश्चर्य्यायां, यः लेशक्लेशः ईषत्क्लेशः तस्मात्, स्वल्पक्लेशार्जिततपःप्रभावादित्यर्थः, न तु महता कृच्छ्रेणार्जिततपःप्रभावात् तादृशतपःप्रभावस्य एतत्क्षुद्रविघ्नोपशमने नियुज्यमानत्वादिति भावः, उपशमितं निरस्तं, विघ्नेभ्यः यज्ञविघातकनिशाचरेभ्यः, प्रतिभयं त्रासः येन तथाभूते, मत्साहाय्यं विनाऽपि ईषन्मात्रेण तपःप्रभावेणैव यज्ञविघ्ने निराकृते सतीति भावः; यष्टुं यज्ञं सम्पादयितुं, प्रवृत्ते वा प्रक्रान्ते सति, रघुकुलस्य कथैव अर्थिनां कामनापूरकत्ववार्त्तैव, अस्तम् अदर्शनं, लोपमिति यावत्, अयते गच्छति। शिखरिणी वृत्तम् ॥ ४५ ॥

त्वमिति।—दीक्षिष्यमाणः दीक्षां प्रवेक्ष्यन्, यज्ञे दीक्षितो भविष्यन्नित्यर्थः, त्वं चेत् यदि, रामभद्रं प्रतीक्षसे अपेक्षसे, प्रत्यवेक्षकरूपेण इत्यर्थो वा, तत तदा, नः अस्माकम्, इयं मेदिनी पृथिवी, अयोध्या भूमिरित्यर्थः, पतिव्रतावृत्तम् एकपतिकाया नियमं, "प्रवासे मलिना कृशा" इत्यादिरूपमिति यावत्, चरतु अनुतिष्ठतु; रामः अस्याः पतिः, तस्य त्वया सह गमने प्रवासित्वात् अस्याः प्रोषितभर्तृकतया तदुचितमालिन्यादिकं भवति, तथा च, इयं भूमिः रामविरहेण नितरां म्लायिष्यते, अतः सत्वरं रामः प्रत्यर्पणीय इति भावः। अनुष्टुप् वृत्तम् ॥ ४६ ॥

(नेपथ्याभिमुखम् )। कः कोऽत्र भोः !

( प्रविश्य )।

दौवारिकः। किमाज्ञापयति देवः?

दशरथः। आहूयतां रामभद्रः।

वामदेवः। लक्ष्मणश्च।

दशरथः। ( साकूतम् )। ऋषे! पृथक्प्रयत्नापेक्षो नायमर्थः ( क )। न खलु प्रकाशमन्तरेण ( ख ) तुहिनभानुरुज्जिहीते।

( दौवारिको निष्क्रान्तः )।

( ततः प्रविशतो रामलक्ष्मणौ )।

रामः। ( सहर्षम् )—

सुराधीशक्रोधाज्जगदपरथा कर्तुमपरे
पुराणब्रह्माणो भुवनपितरः सप्त च कृताः।
धृतास्तुष्टेनाग्नौ वपुरपि च वैश्वानरपथात्
कथा पौराणी यच्चरितमिति हृष्टा प्रथयति ॥ ४७ ॥

( क ) पृथगिति।—अयम् अर्थः लक्ष्मणाह्वानरूप इत्यर्थः, पृथक् स्वतन्त्रतया, द्वितीयमित्यर्थः, प्रयत्नं प्रयासं, न अपेक्षते इति तथोक्तः, रामाह्वानेनैव लक्ष्मणस्यापि आह्वानस्य सिद्धिरिति भावः।

( ख ) प्रकाशं प्रकाशते इति प्रकाशः आतपः, ज्योत्स्ना इति यावत्, "प्रकाशो द्योत आतपः" इत्यमरः। अन्तरेण विनेत्यर्थः। तुहिनभानुः शीतकिरणः, चन्द्र इत्यर्थः। उज्जिहीते उद्गच्छतीत्यर्थः।

सुराधीशेति।—सुराणाम् अधीशः इन्द्रः, तस्मिन् क्रोधः रोषः, विश्वामित्रस्य स्वर्गात् भ्रंशनजनित इति भावः, तस्मात् हेतोः, अपरथा अन्याविधम्, एतदनुरूपं द्वितीयमित्यर्थः, जगत् कर्तुं स्रष्टुम्, अपरे च अन्ये च, एतज्जगत्स्रष्टुः ब्रह्मणः अतिरिक्ताः इत्यर्थः, सप्त सप्तसंख्यकाः, भुवनपितरः जगत्स्रष्टारः, पुराणब्रह्माणः इति यावत्, कृताः सृष्टाः, तथा कृतेन अनन्तरमेव इन्द्रादीनां प्रणिपातात् प्रीतेन, प्रशान्तक्रोधेन स्थगितमिति भावः, आत्मना आत्मना सृष्टाः सप्तसंख्यकाः भुवनपितरः. वैश्वानरपथात् आग्नेयपथात्, आकाशीयमहर्षिमार्गप्रदेशात् यावत्, यत्र मरीच्यादयः ब्रह्मपुत्राः चरन्ति, वर्तन्ते

कथं, सोऽपि भगवान् विश्वामित्रः स्वयमस्माभिरुपचरितव्यः (ग)!! (इति परिक्रामन् पुरोऽवलोक्य सपरितोषं सप्रणयम्)। नूनं विनयनम्रयोस्तात-वामदेवयोरन्तरीयः प्रशान्तपावनीयाकृतिः (घ) स भगवान् विश्वामित्रो भविष्यति।

दशरथः। (सप्रत्यभिज्ञानम्)। आर्य्य!—

अयमयमौदग्र्यप्रशमविश्वसनीयतनु-
र्भुवनभयङ्करीः कथमधत्त रुषोऽपि मुनिः?।
स्थितमिदमेव वा मृदुमनोज्ञतुषारतमा-
स्तमसि सति ज्वलन्ति सहसैव महौषधयः॥४८॥

---

भावः, वह्निः अर्चिष्मान् पतङ्गो इत्यर्थः, हुताय स्थापिताय, इति एवं, पौराणी कथा पुरातनी वार्त्ता, अस्य विश्वामित्रस्य, चारितं प्रभावामिति यावत्, कथयति च विस्तारयति च, प्रकटयामास इत्यर्थः। हीति पादपूरणार्थमव्ययम्। [illegible] वृत्तम्॥४७॥

(ग) उपचरितव्यः सेवितव्यः।

(घ) प्रशान्तेति।—प्रशान्ता सौम्या, पावनीया पवित्रताजननी, आकृतिर्यस्य तथोक्तः।

अयमिति।—अयमयमिति सम्भ्रमे द्विरुक्तिः। अयमयं नु एव, मुनिः विश्वामित्रः, औदग्र्येण उत्कटेन प्रकृष्टेन प्रशमगुणेन, प्रशमगुणसद्भावादित्यर्थः, विश्वसनीया आश्रयणीया, तनुः शरीरं यस्य तथाभूतः सन्नपि, भुवनानां भयङ्करीः भीत्युत्पादिकाः, रुषः क्रोधान्, कथं केन प्रकारेण, अधत्त? धृतवान्? येन स्थितस्य जगतो विध्वंसः, द्वितीयस्य जगतः सृष्टिश्च प्रावर्त्तेति भावः; वा अथवा, इदमेव स्थितं स्थितिः, मर्य्यादैव, नियम इति यावत्, यत् मृदवः कोमलाः, मनोज्ञाः मनोहारिण्यः, तुषारतमाः तुषारवत् अतिशीतलाः, अतिशैत्या इत्यर्थः, महौषधयः दिव्यौषधयः, महाप्रभावसम्पन्नाः पार्वत्यलतादिविशेषाः इत्यर्थो वा, तमसि अन्धकारे, तदाख्ये गुणे च सति, सहसैव ज्वलन्ति दीप्यन्ते। कोकिलकं वृत्तम्—"हय-ऋतु-सागरैर्यतियुतं यदि कोकिलकम्" इति तल्लक्षणात्। इदं तु प्रागुक्तं "यदि भवतो नजौ भ-ज-ज-ला गुरु नर्दटकम्" इति नर्दटकमेव हयादियतियुतं चेत् कोकिलकं नाम वृत्तमिति ज्ञातव्यम्॥४८॥

रामः। वत्स लक्ष्मण! एवं दुरवगाहगम्भीराश्चर्यायन्ते (छ) महात्मानः। अपि च—

व्रतविहतिकरीभिरप्सरोभिः
सह जगदस्य निरंहसो रमन्ते।
नमदमरशिरःकिरीटरोचिर्-
मुकुलितरोषतमांसि चेष्टितानि ॥४९॥

वामदेवः। (दृष्ट्वा सहर्षम्)। कथमागतो रामभद्रः!! (मुनिं प्रति)। भगवन्!—

ब्रह्मज्योतिर्विवर्त्तस्य चतुर्द्धा देहयोगिनः।
ऋष्यशृङ्गवरांशः प्रथमोऽयं महाभुजः ॥५०॥

विश्वामित्रः। (अवलोक्य सहर्षबहुमानम्)। वामदेव! किमुच्यते, आरण्यकेषु (च) किमपि प्रकृष्टतमं ब्राह्मण्यमृष्यशृङ्गस्य। न

(छ) दुरवगाहेति।—दुरवगाहाः दुर्बोधाः, गम्भीराः गभीरमतयश्च। आश्चर्यायन्ते आश्चर्यवत् प्रतीयन्ते, लोकानां चमत्कुर्वन्ति इति यावत्।

व्रतेति।—व्रतस्य तपसः, विहतिं विघ्नं, कुर्वन्तीति तथोक्ताभिः, अप्सरोभिः देवनर्त्तकीभिः, सह जगत् भुवनं, निरंहसः अकीर्त्तिमुद्गच्छत इत्यर्थः, अस्य मुनेः, नमतां प्रणिपतताम्, अमराणां देवानां, शिरःकिरीटानि मौलिस्थमुकुटानि, तेषां रोचिर्भिः प्रभाभिः, चरणपतिताभिरिति भावः, मुकुलितं मुद्रितं, सङ्कुचितमित्यर्थः, उपशमितमिति यावत्, रोषः क्रोध एव, तमः अन्धकारः येषु तथाभूतानि, चेष्टितानि चरितानि, रमन्ते स्फुरन्ति, पराजिताः इति शेषः। पुष्पिताग्रा वृत्तम्—"अयुजि नयुगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रा" इति तल्लक्षणात् ॥ ४९ ॥

ब्रह्मेति।—महाभुजः, महाबाहुः, अयं राम इत्यर्थः, चतुर्द्धा चतुर्भागेन, देहयोगिनः शरीरसंयोगमवाप्नुवतः, प्रतिपन्नदेहस्य इत्यर्थः ब्रह्मज्योतिः ब्राह्मं तेजः, तस्य विवर्त्तस्य परिणामभूतस्य, ऋष्यशृङ्गवरो ऋष्यशृङ्गकृतापेक्षांशितस्येति भावः, प्रथमः आद्यः, ज्येष्ठ इत्यर्थः, अंशः भागः। अनुष्टुप् वृत्तम् ॥ ५० ॥

(च) आरण्यकेषु अरण्यवासिषु, तापसेषु मध्ये इत्यर्थः। विभाण्डकः ऋष्यशृङ्गस्य जनकः।

केवलममुना वत्सेन ब्रह्मर्षिर्विभाण्डकः पुत्रवतां धुरमारोपितः, दशरथोऽपि।

दशरथः। भगवन्! एवमेवैतत्—

ये मैत्रावरुणं पुरोहितवतो वंशे मनोर्जज्ञिरे
तास्ता वैनयिकीः क्रिया विदधिरे येषां च युष्मादृशः।
तेषामञ्चलमेष ते दशरथः सम्प्रत्यमी ये पुन-
र्जातास्ते ध्रुवमृष्यशृङ्गतपसामैश्वर्यमिक्ष्वाकवः ॥ ५१ ॥

( राम लक्ष्मणावुपसर्पतः )।

दशरथः। वत्सौ! भगवानेष निःशेषभुवनमहनीयो (क) महामुनिः कौशिकः, प्रणम्यताम्।

राम लक्ष्मणौ। ( उपसृत्य )। भगवन्! विश्वामित्र! सावित्रौ ( ख ) राम-लक्ष्मणावभिवादयेते ( ग )।

विश्वामित्रः। वत्सौ! आयुष्मन्तौ भूयास्ताम्। ( इति भुजाभ्यां गृहीत्वा रामं निर्वर्ण्य च सबहुमानम् आत्मगतम् )—

वशिष्ठाद्यैर्मन्त्रैर्दधति जगतामाभ्युदयिकीं
धुरं सम्प्रत्येते दिनकरकुलीनाः क्षितिभुजः।

ये इति।—मैत्रावरुणं वाशिष्ठं, पुरोहितवतः पुरतः स्थापयतः, पुरोहितं कुर्वत इत्यर्थः, मनोः वंशे ये राजानः, जज्ञिरे जाताः, युष्मादृशः भवादृशाः, महर्षय इति शेषः, येषां मनुवंश्यानां, वैनयिकीः विनयाधानहेतुभूताः, ताः ताः क्रियाः शिक्षादानादिका इत्यर्थः विदधिरे कृतवन्तः, ते तव, एषः अहं, दशरथः तेषां मनुवंशीयानाम्, अञ्चल प्रान्तदेशः, शेष इत्यर्थः, युष्माभिः शिक्षितानां राज्ञां मध्ये अधमः शेष इत्यर्थः, सम्प्रति अमी एते, ये पुनः इक्ष्वाकवः इक्ष्वाकुवंशीयाः, रामादय इति भावः, जाताः उत्पन्नाः, ते ध्रुवं निश्चयेन, ऋष्यशृङ्गतपसाम् ऐश्वर्यं प्रभावः, माहात्म्यमित्यर्थः। शार्दूलविक्रीडितं वृत्तम् ॥ ५१ ॥

( क ) निःशेषेति।—निःशेषस्य समग्रस्य, भुवनस्य महनीयः पूजनीयः।

( ख ) सावित्रौ सूर्यवंश्यौ।

( ग ) अभिवादयेते प्रणमतः।

वशिष्ठाद्यैरिति।—दिनकरकुलीनाः रविवंशीयाः, एते क्षितिभुजः राजानः,

गृहे येषां रामादिभिरपि कलाभिश्चतसृभिः
स्वयं देवो लक्ष्मीस्तनकलशवारीगजपतिः ॥ ५२ ॥

अपि च—

त्वं तास्ताः श्रुतवानृचो दशरथेस्त्वत्प्रीतये यज्वभिः
स्वाहाकारमुपाहितं हविरिह त्रेताग्निराचामति ।
त्वां क्षीरोदजलेशय क्रतुभिदः पृथ्वीमवातीतर-
न्मुद्वृत्ता दशकन्धरप्रभृतयो निग्राहितास्त्वया ॥ ५३ ॥

वामदेवः । (सस्मितम्) । वत्सौ ! अयमत्रभवान् भवन्तौ नेतुमागतः ।

रामलक्ष्मणौ । यदभिरुचितं भवते तातायच ।

वसिष्ठेन उक्तौ उपदिष्टौ, मन्त्रः मन्त्रणाभिः, जगताम् आभ्युदयिकीम् अभ्युदयमङ्गलं तत्साधनीमित्यर्थः, धुरं राज्यभारं, दधति धारयन्ति, वक्ष्यमाणः, येषां राज्ञां, गृहे सम्प्रति लक्ष्म्याः स्तनकलशः कुचकुम्भ एव, वारी गजबन्धनस्तम्भविशेषः, "वारी तु गजबन्धनी" इत्यमरः, तत्र दृढ इति शेषः, गजपतिः गजेन्द्रः, तत्सदृश इत्यर्थः, लक्ष्मीकान्त इति भावः, स्वयं साक्षात्, देवोऽपि नारायणोऽपि रामादिभिः चतसृभिः कलाभिः अंशैः, अवतीर्ण इति शेषः । शिखरिणी वृत्तम् ॥ ५२ ॥

सम्प्रति ब्रह्मस्वरूपेण रामं स्तौति, त्वामिति ।—हे राम ! इत्यध्याहार्यं, त्वं तास्ताः प्रसिद्धाः, दशरथेः दशरथात्मजात्, ऋचः ब्रह्मस्तुतिरूपा ऋग्वेदोक्ता गाथा इति यावत्, श्रुतवान् ? अपि किम् ? इत्यर्थः, इह अस्मिन्, त्रेताग्निः "गार्हपत्यो दक्षिणाग्नि-राहवनीयश्चेत्यग्नयः । अग्नित्रयमिदं त्रेता—" इत्युक्तरूपाग्निविधोऽग्निः, यज्वभिः यथाविधि याग कुर्वद्भिः याज्ञिकैः, "यज्वा तु विधिनेष्टवान्" इत्यमरः, तव प्रीतये सन्तोषार्थं, स्वाहाकारं स्वाहेति मन्त्रकरणकमित्यर्थः, उपाहितं दत्तम्, अपि आहुतमित्यर्थः, हविः हव्यम्, आचामति भक्षयति, क्रतुभिदः यज्ञभिदः देवाः, क्षीरोदजलेशयं क्षीरसागरशायिनं, त्वां भवन्तं, पृथ्वीं मेदिनीम्, अवातीतरन् अवतारयामासुः, राक्षसविनाशाय इति भावः; त्वया उद्वृत्ताः दुराचाराः, जगत्सन्तापका इति यावत्, दशकन्धरप्रभृतयः रावणादयः, निग्राहिताः निग्रहीताः, विनाशयितव्याः इत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ ५३ ॥

(दशरथस्तो वत्सद्वयमादाय भगवन् ! कृ मित्र ! इत्यर्द्धोक्ते मन्यूत्पीडानिरुध्यमानकण्ठो (ञ) वामदेवस्य मुखमीक्षते )।

वामदेवः। इमौ तौ राम-लक्ष्मणौ। (इत्यर्पयति)।

(विश्वामित्र सादरं गृह्णाति)।

(नेपथ्ये शङ्खध्वनिः)।

(वामदेवो निमित्तमनुमोदमानो दशरथमुल्लासयति)।

(पुनर्नेपथ्ये)।

वैतालिकः (ट)। सुखाय माध्यन्दिनी (ठ) सन्ध्या भवतु देवस्य (ड)। सम्प्रति हि—

किरति मिहिरे विष्वद्रीचः करानतिवामनो
स्थलकमठवद्देहच्छाया जनस्य विचेष्टते।
गजपतिमुखोद्गीर्णैराप्यैरपि त्रसरेणुभिः
शिशिरमधुरामेणाः कच्छस्थलीमधिशेरते ॥५४॥

(ञ) मन्यूत्पीडेति।—मन्युः शोकः, "मन्युः शोकौ तु शुक् स्त्रियाम्" इत्यमरः, तस्य उत्पीडेन अश्रुद्रेकजनितपीडनातिशय्येन, निरुध्यमानः रुध्यमानः, कण्ठो यस्य तथोक्तः।

(ट) वैतालिकः बन्दी, राज्ञां स्तुतिपाठकः इत्यर्थः, "वैतालिका बोधकरा बन्दिनः स्तुतिपाठकाः" इत्यमरः।

(ठ) माध्यन्दिनी मध्याह्नकालिकी।

(ड) देवस्य दशरथस्य।

किरतीति—मिहिरे सूर्ये, विष्वद्रीचः सर्वतः सञ्चारिणः इत्यर्थः, "विष्वद्र्यङ् विष्वगञ्चति" इत्यमरः, करान् मयूखान्, किरति वर्षति सति, मध्याह्न समुपस्थिते सतीत्यर्थ, जनस्य लोकस्य, अतिवामनी अतिखर्वा, देहच्छाया शरीरस्य प्रतिबिम्बं, स्थलकमठवत् अजलस्थितकूर्मवत्, विचेष्टते आचरति, लोकैर्दृश्यते इत्यर्थ, मध्याह्ने छाया आत्मनः पादपार्श्वे दृश्यते इति भावः तथा एणाः हरिणाः, गजपतीनां मुखात् उद्गीर्णैः उत्क्षिप्तैः, आप्यैः जलीयैः, त्रसरेणुभिः "जालान्तरगते भानौ यत् सूक्ष्मं दृश्यते रजः [illegible] तत् प्रमाणानां त्रसरेणुं प्रचक्षते ॥" इत्युक्तपरिमाणविशिष्ट-परिमितैर्जलकणैरित्यर्थः, शिशिरा शीतला, अत एव मधुरा मनोहारिणी तां तादृशीं,

अपि चैतानि पटीरतरुकोटरकुटीरमध्यासीना: (ढ)—

> प्रत्यक्षरस्रुतसुधारसनिर्विषाभि-
> राशीभिरभ्यधिकभूषितभोगभाज: ।
> गायन्ति कञ्चुकविनिह्नुतलोमहर्ष-
> स्वेदोर्मयस्तव गुणानुरगेन्द्रकन्या: ॥५५॥

वैतालिक:। सखे दशरथ! प्रियमपि तथ्यम् (ण) आह वैतालिक:,—

> मन्दोद्धूतै: शिरोभिर्मणिभरगुरुभि: प्रौढरोमाञ्चदण्ड-
> स्फायाक्रमौकसान्धप्रसरदविगलत्सम्प्रदस्वेदपूरा: ।

कञ्चुकश्चोली कञ्चुमुपपटश्च, "कञ्चुकप्रायमतप्तं स्यात् पुंसि कञ्चुकस्तवारिव" इत्यमर: ; अधिशेरते वाऽस्मिन् अपकोऽन्यथ:। हरिणीवृत्तं—"न-स म-र-स-ला ग षड्वेदैर्हयैर्हरिणी मता" इति तल्लक्षणात् ॥ ५४ ॥

(ढ) पटीरेति।—पटीरतरुश्चन्दनवृक्ष:, "पटीरश्चन्दनतरौ" इति मेदिनी ; तस्य कोटरं रन्ध्रमेव, कुटीरं क्षुद्रगृहम्। अध्यासीना: अधितिष्ठमाना:।

प्रत्यक्षरेति।—प्रत्यक्षरम् अक्षरे अक्षरे, गानस्येति भाव:, स्रुत: च्युत:, य: सुधारस: अमृतद्रव: तेन निर्विषाभि: विषशून्याभि:, सुधाया: विषहरत्वादिति भाव:, आशीभि:, दंष्ट्राभि: "स्त्री त्वाशीर्हिताशंसाऽहिदंष्ट्रयो:" इत्यमर:, अभ्यधिकं यथा तथा भूषितो य: भोग: फणदेह:, "भोग: सुखे स्त्र्यादिभृतावहेश्च फणकाययो:" इत्यमर:, तं भजन्ते इति तथोक्ता:, उरगेन्द्रकन्या: भुजङ्गकुमार्य:, कञ्चुकै: निर्मोकै:, विनिह्नुता: गोपिता:, लोमहर्षा: रोमाञ्चा:, गानरसास्वादजनितानन्दादिति भाव:, स्वेदोर्मयश्च घर्मप्रवाहाश्च, गानश्रमजनिता इति भाव: याभि: तथाभूता: सत्य:, तव गुणान् गायन्ति कीर्तयन्ति। वसन्ततिलकं वृत्तम् ॥ ५५ ॥

(ण) तथ्यं सत्यम्।

मन्दोद्धूतैरिति।—मणिभरेण शिर:स्थितरत्नभारेण, गुरुभि: गुरुत्वयुक्तै:, दुर्वहैरिति भाव:, अत एव मन्दं मन्थरं यथा तथा, उद्धूतै: उत्तोलितै:, यद्वा—उत्कम्पितै:, चालितैरित्यर्थ:, शिरोभि: फणै: उपलक्षिता इत्यर्थ:, विशेषणे तृतीया ; तथा प्रौढ: उत्कट:, रोमाञ्च: लोमहर्ष एव, दण्ड: लगुड:, रोमाञ्चस्य काठिन्यात् देहकाठिन्यकरत्वात् पदार्थितदेहस्य दण्डवत् दीर्घत्वाच्च दण्डत्वेनारोप इति भाव:,

जिह्वायुग्माभिपूर्णाननविषमसमुद्गीर्णवर्णाभिरामं
वेलाशैलाङ्कभाजो भुजगयुवतयस्त्वद्गुणानुद्गृणन्ति ॥ ५६ ॥

(सविनयविस्मयस्मितं च)। राजर्षे! प्रत्यासीदति (त) दीक्षाप्रवेशसमयः, तदेवंविधमधुरगोष्ठीभङ्गनिष्ठुराणां प्रथमे (थ) तावत् वयमेव भवितुमिच्छामः।

(दशरथो राम-लक्ष्मणाववलोक्य बाष्पभरोत्तरङ्गितलोचनो मुनिं प्रति भगवन्! इत्युक्ते वाचं स्तम्भं नाटयति)।

वामदेवः। (सबाष्पम्)। भगवन्! कौशिक! साधय, शिवाः (द) सन्तु पन्थानो वत्सयो राम-लक्ष्मणयोः।

(इत्युत्थाय सर्वे यथोचितमाचरन्ति)।

तत स्फायन् स्फीततां गच्छन्, यः निर्मोकः कञ्चुकः, तस्य सन्धेः संयोगस्थानात्, देह-निर्मोकयोः सन्धिस्थानप्रदेशादित्यर्थः, प्रसरन् विस्तारं गच्छन्, अविरतम् अजस्रम् उन्मद सम्यक् हर्षः, स्वेदपूरः घर्मप्रवाहश्च, गात्रमर्जनत इति भावः याम् तथाभूताः, सन्धेरिति पञ्चमी पञ्चम्यन्ततो अन्यत्रापादाने इति वाच्यम्; वेला समुद्रकूलम्, "वेला काले च सीमायामब्धेः कूलविकारयोः" इति मेदिनी, तत्र ये शैलाः पर्वताः, तेषु अङ्कभाजः उत्सङ्गवर्तिन्यः, भुजगयुवतयः भुजङ्गतरुण्यः, जिह्वायुग्मेन जिह्वाद्वयेन, भुजङ्गानां द्विजिह्वत्वादिति भावः, अभिपूर्णं व्याप्तं, यत् आननं मुखं तेन विषमं विपर्यस्तं, दुर्बोध्यं यथा तथा इत्यर्थः, समुद्गीर्णैः समुच्चारितैः, वर्णैः अक्षरैः, अभिरामं मनोज्ञं यथा तथा, तव गुणान् उद्गृणन्ति उच्चैर्गायन्ति, नागानां वैरी गरुडः, स च विष्णोः वाहनः, तस्मात् भयस्य निवारको यो विष्णुः, स तव पुत्रत्वेनावतीर्ण इति धन्यो भवानित्याशयेनेति भावः। स्रग्धरा वृत्तम् ॥ ५६ ॥

(त) प्रत्यासीदति प्रत्यासन्नो भवति, निकटीभवतीत्यर्थः।

(थ) एवंविधेति।—एवंविधा ईदृशी, मधुरा मनोहारिणी, या गोष्ठी सभा संलापो वा, "गोष्ठी सभा-संलापयोः स्त्रियाम्" इति मेदिनी, तस्याः भङ्गेन भङ्गहेतुकत्वेनेत्यर्थः, निष्ठुराः परुषाः, कठोरभाविनः इत्यर्थः, गोष्ठीभङ्गकारकत्वादिति भावः तेषाम्। प्रथमं अग्रगण्याः।

(द) साधय गच्छ। "प्रायेण गमनार्थः साधिर्गोभिः स्थाने प्रयुज्यते" इति नाट्यशास्त्रात्। शिवाः शुभाः, निर्विघ्ना इत्यर्थः।

विश्वामित्रः । एवमास्यतां (ध) भवद्भिः । (इति राजपुत्राभ्यामनुगम्यमानो निष्क्रान्तः ।)

दशरथः । (दीर्घमुष्णं च निःश्वस्य) । वामदेव ! नूनमिदानीमस्मानिव भगवन्तमपि कौशिकमकारणवत्सलं (न) वत्सो मे रामभद्रः,—

क्वचिदस्मद्वियोगार्त्ति-दुःखो दुःखाकरिष्यति ।
अपूर्वविषयालोक-सुखो च सुखयिष्यति ॥५७॥

वामदेवः । (विहस्य) । राजर्षे ! वयं वा कौशिको वेति क्व पुनरेव कक्षाविभागो रामभद्रमाधुर्य्यस्य (प) ? पश्य—

यदिन्दोरन्वेति व्यसनमुदयं वा निधिरपा-
मुपाधिस्तत्रायं जयति जनिकर्त्तुः प्रकृतिता ।

(ध) आस्यताम् उपविश्यताम् ।

(न) अकारणवत्सलम् अहेतुकस्निग्धम् ।

क्वचिदिति ।—क्वचित् कदाचित्, कस्मिंश्चित् स्थाने वा, अस्माकम् अस्माभिः सह इति वा, वियोगेन विच्छेदेन, या आर्त्तिः व्यथा, तया दुःखी व्याकुलः, रामभद्रः इति गद्यस्थकर्तृपदेनान्वयः; दुःखाकरिष्यति दुःखितं करिष्यति, कौशिकमिति गद्यस्थकर्मपदेनान्वयः, तथा क्वचित् अपूर्वः अदृष्टपूर्वः, यः विषयः प्रदेशादिः, तस्य आलोकेन दर्शनेन, सुखी प्रीतः सन्, सुखयिष्यति च सुखीकरिष्यति च, अत्रापि रामभद्रः कौशिकमित्यनेनान्वयः । अनुष्टुप् वृत्तम् ॥ ५७ ॥

(प) कक्षेति ।—कक्षायाः प्रदेशस्य इत्यर्थः, विभागः पृथक् करणम्, अयमस्मदीय अयं पर इति पात्रभेदेन भेदबुद्धिरिति यावत् । रामभद्रमाधुर्य्यस्य रामचन्द्रीयसौन्दर्यस्य रमणीयतायाः, रामभद्रस्य निजः परो वेति भेदबुद्धिर्नास्ति सर्वास्वेव समताबुद्धेरिति भावः ।

यदिति ।—अपां निधिः समुद्रः, यत् इन्दोश्चन्द्रस्य, व्यसनं विपत्तिं, कृष्णपक्षे अदर्शननिबन्धनं, उदयं वा उन्नतिं वा, शुक्लपक्षे पुनः पूर्णतावाप्तिनिबन्धनं, अन्वेति अनुगच्छति चन्द्रस्य अदर्शने उच्छ्वासाभावम् उदये च उच्छ्वासं प्राप्नोतीति भावः, तत्र अनुगमे, अयम् एव उपाधिः कारणमिति यावत्, यत् जनिकर्त्तुः जनकस्य, प्रकृतिता स्वभावः, जयति उत्कर्षेण वर्त्तते इत्यर्थः; अपत्यस्य इन्दोर्व्यसने व्यसनम्, उदये च

अयं कः सम्बन्धो यदनुहरते तस्य कुमुदम् ?
विशुद्धाः शुद्धानां ध्रुवमनभिसन्धिप्रणयिनः ॥५८॥

दशरथः । ( विमृश्य ) । एवमेतत्—

रत्नाकरो जनयिता सहजश्च वर्गः
किं कथ्यताममृत-कौस्तुभ पारिजाताः ।
किं तैरचिन्त्यमिह तत् पुनरन्यदेव
तत्त्वान्तरं कुमुदबन्धुरसौ यदिन्दुः ॥५९॥

( पुनरवलोक्य ) । कथम् !! लोचनपथम् ( फ ) अतिक्रान्तः सराम-लक्ष्मणो भगवान् !! तत् वयमपि वत्सप्रवासदुर्मनायमानां दक्षिणकोशलेश्वरसुतां (ब) देवीमुपेत्य सान्त्वयामः ।

( इति निष्क्रान्ताः सर्वे ) ।

( इति मुनीन्द्रसंवादो नाम प्रथमोऽङ्कः ) ।

---

उदयो जनकस्य समुद्रस्य स्वाभाविकः इति सम्भाव्यत इति भावः, परन्तु कुमुदं कैरवं, यत् तस्य इन्दोः, अनुहरते अनुगच्छति, चन्द्रे उदिते कुमुदमुल्लसति अस्तमिते च निमीलतीति भावः, अयम् एषः अनुहरणरूपः, सम्बन्धः सम्पर्कः, कः ? कीदृशः ? इन्दुना सह कुमुदस्य न कोऽपि सम्बन्धोऽस्तीत्यर्थः, पिता पुत्रस्य उदये विपदि च तदनुरूप सुखं दुःखञ्चानुभवतीति स्वभावो युज्यते, कुमुदेन च चन्द्रस्य कः सम्बन्धः, येन तथा आचरतीति भावः ; अतः सम्बन्धः न प्रत्ययहेतुरित्याह, विशुद्धा इति । विशुद्धाः निर्मलप्रकृतयः, शुद्धानां निर्मलप्रकृतीनाम्, अनभिसन्धिप्रणयिनः अकृत्रिमस्नेहभाजः, भवन्तीति शेषः, इति ध्रुवम् उत्प्रेक्षा । शिखरिणी वृत्तम् ॥ ५८ ॥

रत्नाकर इति ।—रत्नाकरः समुद्रः, जनयिता उत्पादकः, अमृत-कौस्तुभ-पारिजाताश्च, सहजो वर्गः सोदरः, अत्र किं कथ्यताम् ? किं वक्तव्यम् ? तैः अमृत-कौस्तुभ-पारिजातैः रत्नाकरैश्च वैयर्थ्यं, किम् ? न किमपि प्रयोजनं चन्द्रस्येति भावः, पुनः किन्तु, इह जगति, अन्यदेव अपरं किञ्चित्, तत् अनिर्देश्यमिति भावः, अचिन्त्यम् अतर्कणीय, तत्त्वान्तरं भावान्तरम्, अस्तीति शेषः, यत् असौ इन्दुः चन्द्रः, कुमुदबन्धुः कैरवबान्धवः ; अन्य-जनकभावादिसम्बन्धोऽकिञ्चित्कर इति भावः । वसन्ततिलकं वृत्तम् ॥ ५९ ॥

( फ ) लोचनपथं दृष्टिमार्गम् ।

( ब ) वत्सेति ।—वत्सयोः राम-लक्ष्मणयोः, प्रवासेन भिन्नदेशत्वेन, विच्छेदेनेति

# द्वितीयोऽङ्कः।

(ततः प्रविशति यजमानशिष्यः)।

शिष्यः। अये! प्रभातप्रायेव रजनी!! तथा हि—

तमोभिः पीयन्ते गतवयसि पीयूषवपुषि
ज्वलिष्यन्मार्तण्डोपलपटलधूमैरिव दिशः।
सरोजानां कर्णेजपमयमयस्कान्तमणिवत्
ममाऽन्तःशल्यं तपति पतिरद्यापि न रुचाम्॥ १॥

अपि च—

जाताः पक्वपलाण्डुपाण्डुमधुरच्छायाकिरस्तारकाः
प्राचीमङ्कुरयन्ति किञ्चन रुचो राजीवजीवातवः।

श्रावत, "प्रणामो भिन्नदेशित्व काव्यांशापाय सम्मतम्" इति दर्पणः; दुर्मनायमानां दुःखितमनस्काम्। दाशरथजननस्मरसुता कौसल्याम्।

इति श्रीजीवानन्दविद्यासागरभट्टाचार्यविरचिता
अनर्घराघवप्रथमाङ्कव्याख्या समाप्ता।

---

तमोभिरिति।—पीयूषवपुषि अमृतमयदेहे प्रसन्नरश्मौ चन्द्रे इत्यर्थः, गतम् अतीतं, वयः जीवनकालो यस्य तथाभूते, अस्तं गते सतीत्यर्थः, ज्वलिष्यतः सूर्यकिरणयोगेन तेजः प्रकटयिष्यतः, मार्तण्डोपलपटलस्य सूर्यकान्तमणिनिचयस्य, धूमैरिव तमोभिः तिमिरैः, दिशः पीयन्ते आच्छाद्यन्ते इति भावः, अद्यापि इदानीमपि, रुचां प्रभाणां, पतिः प्रभुः, सूर्यः इत्यर्थः, अयस्कान्तमणिवत् कर्णेजपम् भ्रमरमयं, सरोजानां पद्मानाम्, अन्तःशल्यम् अन्तराच्छन्नलौहनिर्मितशल्यमिव, अद्य बहिर्निर्गमयन्, न तपति न सन्तापं वितरति, न प्रकाशं प्राप्नोतीत्यर्थः। उपमाऽलङ्कारः। शिखरिणी वृत्तम्॥ १॥

जाता इति।—तारकाः नक्षत्राणि, पक्वः परिणतः, यः पलाण्डुः यवनेष्टः, "पेयाज" इति प्रसिद्धः कन्दविशेषः इत्यर्थः, तद्वत् पाण्डुः शुभ्रा, मधुरा मनोज्ञा च, या छाया

लूतातन्तुवितानवर्तुलमितो बिम्बं दधच्चुम्बति
प्रातः प्रोषितरोचिरम्बरतलादस्ताचलं चन्द्रमाः ॥ २ ॥

( सर्वतोऽवलोक्य च )—

दिङ्मण्डलीमुकुटमण्डनपद्मराग-
रत्नाङ्कुरे किरणमालिनि गर्भितेऽपि ।
सौखप्रसुप्तिकमधुव्रतचक्रवाल-
वाचालपङ्कजवनीसरसाः सरस्यः ॥ ३ ॥

अपि च—

प्राचीविभ्रमकर्णिकाकमलिनीसंवर्तिकाः सम्प्रति
हे तिस्रो रमणीयमम्बरमणेर्व्यामुच्चरन्ते रुचः ।

ध्वान्तिः, तां छिन्दन्ति विच्छिन्दन्ति, विस्तारयन्तीत्यर्थः तथाभूताः, जाताः, राजीवानां पद्मानां, जीवातवः जीवनौषधभूताः, "जीवातुर्जीवनौषधम्" इत्यमरः, रुचः प्रभाः, अरुणकिरणा इत्यर्थः, प्राचीं पूर्वां दिशं, किञ्चन किञ्चिन्मात्र, अल्पमात्रमित्यर्थः, अङ्कुरयन्ति उद्भवन्ति, किञ्चित् प्रकाशयन्तीत्यर्थः, इतः अस्मिन्, प्रातः प्रभातसमये, प्रोषितरोचिः गतप्रभः, चन्द्रमाः लूता ऊर्णनाभाख्यकीटविशेषः, तस्याः तन्तुवितानवत् सूत्रविस्तारवत्, वर्तुलं गोलाकार, क्षीणं धूसरञ्चेति भावः, बिम्बं मण्डलं, दधत् बिभ्रत् सन्, अम्बरतलात् आकाशमण्डलात्, अस्ताचलं चुम्बति स्पृशति, अस्तगिरिशिखरम् आश्रयतीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ २ ॥

दिङ्मण्डलीति ।—दिङ्मण्डल्याः प्राच्या दिश इत्यर्थः, मुकुटमेव मण्डनं भूषणं, तस्मिन् यत् पद्मरागरत्नं तस्य अङ्कुरः प्ररोहः तस्मिन्, किरणमालिनि सहस्रकिरणे, सूर्ये इत्यर्थः, गर्भितेऽपि गर्भस्थितेऽपि, गगनाभ्यन्तरस्थितेऽपीत्यर्थः, अनुदितेऽपीति भावः, सरस्यः सरोवराणि, सुखप्रसुप्तिं सुखनिद्रां पृच्छन्तीति सौखप्रसुप्तिकाः, तथाभूता ये मधुव्रताः भ्रमराः, तेषां चक्रवालेन मण्डलेन, समूहेनेत्यर्थः, वाचालया बहुभाषिण्या, भ्रमराणामविरतगुञ्जनादिति भावः, "स्याज्जल्पाकस्तु वाचालो वाचाटो बहुगर्ह्यवाक्" इत्यमरः; पङ्कजवन्या कमलवनेन, सरसाः रसवत्यः, मनोहारिण्य इति भावः, जाता इति शेषः । वसन्ततिलकं वृत्तम् ॥ ३ ॥

प्राचीति ।—सम्प्रति प्राच्याः दिशः, नायिकाया इति ध्वनिः; विभ्रमाय विलासार्थमित्यर्थः, कर्णिकाः कर्णाभरणानि, "कर्णिका कर्णभूषणं" इत्यमरः; तत्स्वरूपा इति

सूक्ष्मोच्छ्वासमपीदमुन्मुकुलतया सम्भूय कोषाद्बहि-
र्निष्क्रामद्भ्रमरीवसम्भ्रमभरादम्भोजमुज्जृम्भते ॥ ४ ॥

अपि च—

एक-द्विप्रभृतिक्रमेण गणनामेषामिवास्तं यतां
कुर्वाणा समकोचयद्दशशतान्यम्भोजसंवर्त्तिकाः ।
भूयोऽपि क्रमशः प्रसारयति ताः सम्प्रत्यमूनुद्यतः
सङ्ख्यातुं सकुतूहलेव नलिनी भानोः सहस्रं करान् ॥ ५ ॥

अपि च—

प्रत्यासन्नसुरेन्द्रसिन्धुरशिरःसिन्दूरसान्द्रारुणा
यत्तेजस्त्रसरेणवो वियदितः प्राचीनमातन्वते ।

भाव., कमलिनीसंवर्त्तिकाः पद्मिनीनवदलानीत्यर्थः, तत्स्वरूपा इति भावः, अम्बरमणेः सूर्यस्य, द्वे तिस्रः, उभयत्रापि वा इति शेषः, द्वे वा तिस्रो वेत्यर्थः, रुचः प्रभाः, द्याम् आकाशम्, उच्चरन्ते उद्गच्छन्ति, पूर्वाकाशमुद्भासयितुं प्रक्रमन्त इत्यर्थः, सूक्ष्मोच्छ्वासमपि अल्पविकाससम्पर्कात् ईषत् विकसितमपि, इदम् अम्भोज पद्मम्, उन्मुकुलतया उत्कण्ठया, कदा बहिर्निर्गच्छाम इति उद्वेगातिशय्यादित्यर्थः, सम्भूय मिलित्वा, कोषात् कुड्मलात्, सायं मुकुलीभाव गतात् पद्मादित्यर्थः, बहिर्निष्क्रामन्तः निर्गच्छन्तः, भ्रमरीवस्य भ्रमरसमूहस्य, पूर्वसन्ध्याया कमलदलान्तः आबद्धस्य इति भावः, सम्भ्रमभरात् आवेगातिशयात् त्वरातिशयात् वा हेतोः, "सम्भ्रमस्त्वरा" इत्यमरः, उज्जृम्भते अत्यन्त विकसतीत्यर्थः । शार्दूलविक्रीडितं वृत्तम ॥ ४ ॥

एकेति ।—नलिनी पद्मिनी, अस्त यतां गच्छताम्, एषां किरणानाम्, एक-द्विप्रभृतिक्रमेण एकः किरणः अस्तं गतः, द्वौ किरणौ अस्तं गतौ, त्रयः किरणा अस्तं गता इत्यादिरूपेण, गणनां सङ्ख्या, कुर्वाणेव कुर्वतीव, दशशतानि सहस्रमित्यर्थः, अम्भोजसंवर्त्तिकाः पद्मनवदलानि, "संवर्त्तिका नवदलम्" इत्यमरः; समकोचयत न्यमीलयत्, किरणानामस्तगमनवत् एकादिक्रमेण सङ्कुचिता अकरोदित्यर्थः, नवदलानि निमीलितवतीति यावत्, सम्प्रति इदानीम्, उद्यतः उदयं गच्छतः, भानोः सूर्यस्य, अमून् सहस्र करान् किरणान्, सङ्ख्यातुं गणयितुं, सकुतूहलेव कौतुकवतीव, भूयोऽपि पुनरपि, ताः संवर्त्तिकाः, क्रमशः एक-द्व्यादिक्रमेण, प्रसारयति विस्तारयति, विकाशयतीत्यर्थः । उत्प्रेक्षाऽलङ्कारः । शार्दूलविक्रीडितं वृत्तम ॥ ५ ॥

प्रत्यासन्नेति ।—प्रत्यासन्नः निकटवर्त्ती, पूर्वदिग्गजपत्वादिति भावः, यः सुरेन्द्रः

शुनःशेफः। (साकूतमुत्थायालिङ्ग्य च)। वयस्य! शृणोषि भगवतो गौतमस्य महर्षेरहल्यां नाम धर्मदारान् (ठ)?

पशुमेढ्रः। जा जणअवंसपुरोहिदस्स तत्थभवदो सदाणंदस्स जणणी? तदो तदो? *

शुनःशेफः। सेयं पुरा पुरुहूतखण्डितचरित्रा (ड) तस्य दीर्घतपसो मुनेर्मन्युना निजमिव (ढ) तदिन्द्रियदौर्बल्यम् (ण) एवं विवर्त्तमानमनुभवन्ती (त) सम्प्रत्यस्य रघुराजपुत्रस्य तेजसा तस्मादन्धकारान्निरमुच्यत (थ)। तदलमावेगेन (द)।

पशुमेढ्रः। (उन्मील्य चक्षुषी सर्वतोऽवलोक्य)। अहो अच्चरिअं!! अज्जस्स पसादेण पुणो वि जीअलोए पविट्ठो म्हि। तह वि संकज्जरो अज्ज वि ण मं परिच्चअदि। ता अज्ज! सुणस्सेह! मुहुत्तअं विसमीअदु। †

शुनःशेफः। सखे! भयमिति किमेतत् ब्राह्मणस्य? तत् पर्य्यवस्थापयात्मानम् (ध)। (इत्युपविशतः)।

* या जनकवंशपुरोहितस्य तत्रभवतः शतानन्दस्य जननी? ततस्ततः?

† अहो! आश्चर्यम्!! आर्य्यस्य प्रसादेन पुनरपि जीवलोकं प्रविष्टोऽस्मि। तथाऽपि साध्वसज्वरोऽद्यापि न मां परित्यजति। तदार्य्य! शुनःशेफ! मुहूर्त्तं विश्रम्यताम्।

(ठ) धर्मदारान् धर्मपत्नीम्।

(ड) पुरुहूतेति।—पुरुहूतेन इन्द्रेण, खण्डितं भग्नं, चारित्रं पातिव्रत्यमिति यावत् यस्याः तथाभूता।

(ढ) दीर्घतपसः दीर्घकालं व्याप्य तपश्चरतः, महातपस्विन इत्यर्थः। मुनेः गौतमस्य। मन्युना क्रोधेन। निजमिव स्वमिव।

(ण) इन्द्रियदौर्बल्यम् इन्द्रियस्य स्पर्शेन्द्रियस्य, दौर्बल्यं विकारमिति यावत्।

(त) विवर्त्तमानं परिणमत्। अनुभवन्ती भुञ्जाना।

(थ) अन्धकारात् पाषाणभावेन जीवलोकेन सह संसर्गशून्यत्वादिति भावः। निरमुच्यत निर्मुक्ता अभूदित्यर्थः।

(द) आवेगेन उद्वेगेन।

(ध) पर्य्यवस्थापय स्थिरीकुरु। आत्मानं स्वम्।

यितुमधीष्टे (ख), किं पुनर्नयनसहस्रतयस्य तादृशि विभवे मरुतां पतिः? चक्षुःप्रीतिमुद्भवन्तीमनूद्भवन्ति चापराणि कुसुमचापचापलानि (ग)।

पशुमेढ्रः । (विहस्य)। सखे, एदाए ज्जेव्व मुणिघरणीए पुत्तपरिणामो एत्थ रामभद्दस्स पवासे कारणं । *

शुनःशेफः । इदं तावत् प्रथमम् (घ)।

पशुमेढ्रः । (साश्चर्य्यम्)। अज्ज । दुदीअं (ङ) वि सुणिदुं इमिणा दे वअणेण पज्जुस्सुगो (च) म्हि ।†

शुनःशेफः । सखे! त्वयि किमकथनीयं नाम। अस्ति किष्किन्धायां पुरन्दरस्य (छ) नन्दनो वालिर्नाम प्लवगराजः ।

* सखे, एतस्या एव मुनिगृहिण्याः पुत्रपरिणामोऽत्र रामभद्रस्य प्रवासे कारणम् ।

† आर्य्य । द्वितीयमपि श्रोतुमनेन तव वचनेन पर्य्युत्सुकोऽस्मि ।

रिणश्च., भोग्यवस्तुभिरिति भावः। आक्षयमाणलोचनद्वितयस्य आक्षयमाणस्य नयनयुगलस्येत्यर्थः ।

(ख) विवेकं विचारं, सदसद्विचारबुद्धिमित्यर्थः। अङ्कुशयितुम् अङ्कुशीकर्त्तुं, तादृशं लोचनयुगलं विवेकज्ञानेन निवारयितुमिति यावत्। न अधीष्टे न प्रभवति ।

(ग) नयनसहस्रतयस्य नयनानां सहस्रस्येत्यर्थः। विभवे ऐश्वर्य्ये सतीत्यर्थः। मरुतां पतिः देवेन्द्रः। चक्षुःप्रीतिं नेत्रानुरागम्, उद्भवन्तीम् उत्पद्यमानाम्, अनु पश्चात्, अपराणि अन्यानि, कुसुमचापस्य कामस्य, चापलानि चपलकार्य्याणि, उद्भवन्ति उत्पद्यन्ते, दर्शनशालतापरिहारानन्तरमेव वासनान्तरपरिहारार्थं साधुविगीतानि परदारसम्भोगादनु अभिलाषरूपाणि कामविलसितानि जायन्ते इति भावः ।

(घ) प्रथमं मुख्यम्, आद्यं वा, कारणमिति शेषः ।

(ङ) द्वितीयं, कारणमिति शेषः ।

(च) पर्य्युत्सुकः समुत्सुकः, कौतूहलीत्यर्थः ।

(छ) पुरन्दरस्य इन्द्रस्य । प्लवगराजः वानराधिपतिः ।

तत्र रजनीचरचक्रवर्त्तिना दशकन्धरेण सह प्रवृत्तमैत्रीकम् अवलोक्य वानराच्छभल्ल-गोलाङ्गूलप्रभृतीनामाचार्य्यः सर्वामात्यानुमतः (क) जाम्बवानवादीत्।

पशुमेढ्रः। (सकौतुकम्)। तदो तदो? *

शुनःशेफः। ततश्च "राजन्! मायाविनी (ख) खल्वियं राक्षसजातिः; विशेषेण महेन्द्रावस्कन्दकन्दलितविक्रमः (ग) पितृवैरी तवायं रावणः। अपि च, त्वदीयदोर्मूलसम्पीडनगलितपौरुषो (घ) न विश्वसनीय इति स्वयमाशङ्कनीयः। नापि सामन्तान्तरजिगीषायामन्तरावर्त्तिनि समुद्रे लघुसमुत्थः (ङ), तदनेन विराधमण्डलेन महासुरविजयिना मैत्रमनर्थानुबन्धि

* ततस्ततः ?

(क) रजनीचरचक्रवर्त्तिना निशाचराधिपेन, राक्षसराजेनेत्यर्थः। प्रवृत्तमैत्रीकं सञ्जातमित्रभावम्। वानरेति।—वानराः कपयः, अच्छभल्लाः भल्लुकाः, "अच्छ भल्लुके। ऋक्षाच्छभल्लभल्लूकाः." इत्यमरः; गोलाङ्गूलाः गोलाङ्गूलाकृतिलाङ्गूलविशिष्टाः कृष्णमुखवानरविशेषाः, तत्प्रभृतीनाम्। आचार्य्यः गुरुः। सर्वामात्यानुमतः सर्वेषु अमात्येषु सर्वैरमात्यैर्वा समादृतः।

(ख) राजन्! नृपते! बालिन्!। मायाविनी कपटमयी, छलनापरायणेत्यर्थः।

(ग) महेन्द्रेति।—महेन्द्रस्य अवस्कन्देन आक्रमणेन, कन्दलितः उद्भटं गतः, सर्वत्र प्रसारं प्राप्त इत्यर्थः, विक्रमो यस्य तथोक्तः।

(घ) त्वदीयेति।—तव इदं त्वदीयं, यत् दोर्मूलं बाहुमूलं, तेन यत् सम्पीडनं सम्यक् पेषणमित्यर्थः, तेन गलितं विनष्टं, पौरुषं पुरुषकारः, पुरुषोचितसामर्थ्यमित्यर्थः यस्य तथाभूतः। पुरा सन्ध्यामुपासीनं बालिनमुपेत्य रावणः सङ्ग्रामाय आचक्राम। स तु तं कक्षमारोप्य सप्तसु समुद्रेषु भ्रामयित्वा सन्ध्यां समाप्य च निर्जीवमिव शान्तिग्रहणमनुनीतस्त्याजेति पुरावार्त्ता।

(ङ) सामन्तेति।—सामन्तान्तरस्य राजान्तरस्य, जिगीषायां जेतुमिच्छायां, सत्यामपीति शेषः, तव निग्रहार्थम् अन्येन राज्ञा साहाय्यमानयतीति भावः, अन्तरावर्त्तिनि मध्यवर्त्तिनि, समुद्रे लघु शीघ्रं, समुत्तिष्ठतीति तथोक्तः, तव बाहुबलेन खण्डितपौरुषतया असामर्थ्यादिति भावः।

शुनःशेफः । ततश्च तद्वचनं जराप्रलपितम् (ञ) इत्युपहसति हरीश्वरे उपांशु तदनुमत्या महामात्यस्य केशरिणः (ट) पुत्रो हनुमान् कुमारं सुग्रीवमादाय ऋष्यमूकं नाम पर्वतदुर्गमनुप्रविष्टः ।

पशुमेढ्रः । ( साकूतम् (ठ) ) । अज्ज ! जो सो मारुदी तेदामल्लो (ड) त्ति सुणीअदि ?*

शुनःशेफः । अथ किम् (ढ) ।

पशुमेढ्रः । ( सविचिकित्सम् (ण) ) । अज्ज ! जधा तधा भोदु, सामी सामी ज्जेव्व ; तं (त) परिच्चइअ ण सरिसो (थ) तारिसस्स महाणुभावस्स पडिऊलपरिग्गहो † (द) ।

* आर्य ! योऽसौ मारुतिस्त्रेतामल्ल इति श्रूयते ?

† आर्य ! यथा तथा भवतु, स्वामी स्वाम्येव ; तं परित्यज्य न सदृशस्तादृशस्य महानुभावस्य प्रतिकूलपरिग्रह ।

( ञ ) जरति ।—जरया वार्द्धकेन, प्रलपितम् अर्थशून्य वचनम्, असङ्गतवाक्यमित्यर्थः, "प्रलापोऽनर्थकं वच." इत्यमरः ।

( ट ) हरीश्वरे कपीन्द्र, वानरराजे वालिनीत्यर्थः, "शुक्राहिकपिभेकेषु हरिर्ना" इत्यमरः । उपांशु एकान्ते । तदनुमत्या तस्य जाम्बवतः, अनुमत्या आदेशेन । महामात्यस्य महामन्त्रिणः । केशरिणः तदाख्यस्य वानरस्य ।

( ठ ) साकूतं साभिप्रायम् ।

( ड ) मारुति. मरुतः वायोरपत्यं पुमान्, केशरिणः क्षेत्रे अञ्जनायां वायुना जात इति पुराणवार्त्ताऽनुसन्धेया । त्रेतामल्लः त्रेता द्वितीयं युग, तत्र मल्लः वीरः ।

( ढ ) अथ किं तथेत्यर्थः । "अथ किं स्वीकारार्थकम्" इति भरतः ।

( ण ) सविचिकित्सं ससंशयं, "विचिकित्सा तु संशय." इत्यमरः ।

( त ) तं स्वामिनम् ।

( थ ) न सदृशः न युक्तः ।

( द ) महानुभावस्य महाप्रभावस्य, महावीरस्य हनुमत इत्यर्थः । प्रतिकूलपरिग्रहः प्रतिकूलस्य प्रतिद्वन्द्विनः, सुग्रीवस्येत्यर्थः, परिग्रहः स्वीकारः, सुग्रीवस्य प्रभुत्वस्वीकरणमित्यर्थः, तदाश्रयग्रहणमित्यर्थो वा, "परिग्रहः कलत्रे च मूल स्वीकारयोरपि" इति मेदिनी ।

शुनःशेफः। (विहस्य)। पुरैव किलायमाञ्जनेयः (ध) भगवतः सहस्रकिरणात् (न) व्याकरणविद्यामधीयानस्तदात्मजन्मनो वानरयोनेः (प) सुग्रीवस्य साहायकमभिप्रायज्ञो गुरुदक्षिणीचकार (फ)।

पर्शुमेढ्रः। (सानन्दम्)। हुं। ता उचिदं ज्जेव्व गुरुपुत्तो सब्रह्मचारी (ब) वा अणुवट्टीअदि। तदो तदो? *

शुनःशेफः। ततश्चाहिभयोपजापजर्जरं सुहृद्वृन्दम् (भ) उपश्रुत्य राक्षसराजः खर-दूषण-त्रिशिरोभिः सहामात्यैरधिष्ठितमात्मबलैकदेशं विन्ध्योदधेरपि (म) कूले बालिप्रतिग्रहाय (य) प्राहिणोत्।

पर्शुमेढ्रः। कधं, अपरिहीणमित्तधम्मो (र) वि सो रक्खसो†।

शुनःशेफः। सखे! किमुच्यते, रावणः खल्वसौ।

---

* हुम्। तदिदमेव गुरुपुत्रः सब्रह्मचारी वा अनुवर्त्यते। ततस्ततः?

† कथम्, अपरिहीणमित्रधर्मोऽपि स राक्षसः।

---

(ध) अञ्जनेः: अञ्जना नाम काचित् वानरी तस्याः सुतः, हनुमानित्यर्थः।

(न) सहस्रकिरणात् सूर्यात्।

(प) तदात्मजन्मनः तत्पुत्रस्य, सूर्यात्मजस्येत्यर्थः। वानरयोनेः वानरीगर्भजस्य।

(फ) साहायकं साहाय्यम्। अभिप्रायज्ञः आशयज्ञः, गुरोः सूर्यस्येति भावः। गुरुदक्षिणीचकार गुरुदक्षिणात्वेन स्वीकृतवानित्यर्थः।

(ब) सब्रह्मचारी सतीर्थः, सहाध्यायीत्यर्थः।

(भ) अहिभयेति।— सरहस्यत्वात् आहृताकारत्वाच्च सर्प एव अहिः, तस्मात् भयम् अहेरिव तुल्यं स्वपक्षात् भयमित्यर्थः, "भूभुजामहिभयं स्वपक्षप्रभवं भयम्" इत्यमरः; उपजापः भेदः, ताभ्यां जर्जरं जीर्णं, दुर्बलमिति भावः। सुहृद्वृन्दं सुहृदः मित्राणि, बालिनः इत्यर्थः, वृन्दम्।

(म) विन्ध्योदधेः समुद्रस्य। कूलेऽपि उपान्ते।

(य) बालिप्रतिग्रहाय बालिनः साहाय्यायेत्यर्थः।

(र) अपरिहीणेति।—न परिहीनः न परित्यक्तः, मित्रधर्मः येन तथाभूतः।

शुनःशेफः। ततश्च श्रौतस्य विधेः प्रत्यूहमस्याः (अ) शङ्कमानः कुलपतिरिमौ दाशरथी रामलक्ष्मणावानीतवान्।

पशुमेढ्रः। जाणे, रामभद्दो त्ति को वि रक्खसाणं उवरि अवदिण्णो (आ) क्खु एसो *।

शुनःशेफः। सखे! एवमेतत्। रामभद्र इति कोऽप्ययं चतुरक्षरो राक्षसरक्षासिद्धमन्त्रः (इ)। विशेषेण पुनरिदानीं भगवता कौशिकेन ब्रह्मज्योतिषः (ई) तादृशं विवर्त्तम् (उ) आचार्य्यं दिव्यास्त्रमन्त्रपारायणम् (ऊ) अध्यापितः।

पशुमेढ्रः। सहे, मंतमईहिं अत्थदेवदाहिं समं बलादिबलाओ (ए) सत्तीओ वि रामे संकमिस्सदि †।

शुनःशेफः। अथ किम्। तदपि वृत्तमेव।

---

* जाने, रामभद्र इति कोऽपि राक्षसानामुपर्य्यवतीर्णः खल्वेषः।

† सखे, मन्त्रमयीभिरस्त्रदेवताभिः समं बलाऽतिबले शक्ती अपि रामे सङ्क्रमिष्यत।

---

(अ) श्रौतस्य श्रुतिवेदः तद्विहितस्य, विधेः यज्ञस्येत्यर्थः। प्रत्यूहं विघ्नम्। अस्याः ताडकायाः, सकाशादिति शेषः।

(आ) राक्षसानाम् उपरि अवतीर्णः राक्षसेभ्यः अधिकबलशालित्वेनावतीर्ण इत्यर्थः, राक्षसान् हन्तुम् अवतीर्ण इति भावः।

(इ) चतुरक्षरः चतुर्भिरक्षरैः निष्पन्न इति यावत्। राक्षसरक्षेति।—राक्षसेभ्यः रक्षायां सिद्धमन्त्रः प्रत्यक्षफलप्रदः मन्त्र इति यावत्।

(ई) ब्रह्मज्योतिषः ब्रह्मतेजसः।

(उ) विवर्त्तं परिणामभूतम्।

(ऊ) दिव्यास्त्रेति।—दिव्यानाम् अलौकिकानाम्, अस्त्राणां कृशाश्वतनयानां, ये मन्त्राः रहस्योपनिषदः, तेषां पारायणं पारगमनं, साकल्यमित्यर्थः।

(ए) बलाऽतिबले बला च अतिबला च ते, विद्याविशेषौ, अनयोः पाठे क्षुधा-पिपासाराहित्यं स्यात्। उक्तञ्च रामायणे—"क्षुत् पिपासे न ते राम! भविष्येते नरोत्तम!। बलामतिबलाञ्चैव पठतस्तव राघव!॥" इति।

वसुमेद्रः। भज्ज ! णं भणामि, जइ णिभाओ ज्जेव्व सत्तीओ, णिआओ ज्जेव्व अत्थविज्जाओ, ता किं त्ति अत्तओ विग्घो-वसमे राहवस्स गोरवमुप्पादेदि तत्थभवं कोसिओ ? अहवा पाहुणहत्थेण सप्पमारणं (घ) क्खु एदं। *

यज्ञ.श्रेफ:। सखे ! अनभिज्ञोऽसि, स्वयं प्रयोगादन्तेवासिभिः (ङ) विहितः प्रयोगो महिमानमाचार्य्याणामुपचिनोति (च)। पश्य—

स्थानेषु शिष्यनिवहैर्विनियुज्यमाना
विद्या गुरुं हि गुणवत्तरमातनोति।
आदाय शुक्तिषु बलाहकविप्रकीर्णैः
रत्नाकरो भवति वारिभिरम्बुराशिः॥ ८॥

---

* आर्य्य ! ननु भणामि, यदि निजा एव शक्तयः, निजा एवास्त्रविद्याः, तत् किमित्यात्मनो विघ्नोपशमे राघवस्य गौरवमुत्पादयति तत्रभवान् कौशिकः ? अथवा प्राघुणहस्तेन सर्पमारणं खल्वेतत्।

---

(घ) प्राघुणेति।—प्राघुणः अतिथिः, "प्राघुणस्त्वतिथिर्द्वयोः" इति त्रिकाण्ड-शेषः; तस्य हस्तेन। यदि सर्पो दशति तदा प्राघुणमेव, यदि सर्पः प्राघुणेन हन्यते तदा गृहस्थस्य कुशलमेव; स्वस्य मन्त्रादिप्रयोगसामर्थ्येऽपि यदि तत् न स्फुरति तदा स्वस्यैव नाश इति भावः।

(ङ) स्वयं प्रयोगात् स्वयं प्रयोगमपेक्ष्येत्यर्थः, अन्यादीनामिति शेषः, ल्यब्लोपे पञ्चमी। अन्तेवासिभिः शिष्यैः।

(च) उपचिनोति वर्द्धयति।

स्थानेष्विति।—स्थानेषु योग्यस्थलेषु, शिष्यनिवहैः छात्रगणैः, विनियुज्यमाना विशेषेण प्रयुज्यमाना, विद्या गुरुम् आचार्य्यं, गुणवत्तरम् अतिशयेन गुणवन्तम्, आतनोति हि प्रख्यापयत्येव; तथा हि, अम्बुराशिः समुद्रः, आदाय गृहीत्वा; समुद्रादेवेति भावः, शुक्तिषु मुक्तास्फोटेषु, "मुक्तास्फोटः स्त्रियां शुक्तिः" इत्यमरः; बलाहकैर्मेघैः, विप्रकीर्णैः विक्षिप्तैः, वारिभिः जलैः करणैः, मुक्तारूपेण परिणतैरिति

किञ्च, दीप्यमानाः (छ) न क्रुध्यन्तीति रक्षितारं क्षत्रिय-मुपादत्ते (ज)।

पारिपार्श्वकः। अज्ज ! सोहणं मंतेसि। अण्णं वि किं वि पुच्छिदु-कामो म्हि। *

सूत्रधारः। किं तत् ?

पारिपार्श्वकः। सव्वधा णिगूढं (झ) वि वाणराणं छग्गुण्णं (ञ) कधं अज्जेण पडिवण्णं (ट)? †

सूत्रधारः। सखे! सर्वमेतदयोध्यायात्रायां समाधिमयेन (ठ) चक्षुषा साक्षात्कृतत्रिभुवनवृत्तान्तस्य तातविश्वामित्रस्य मुखादश्रौषम्। (सर्वतोऽवलोक्य)। अये! प्राभातिकी (ड) भुवनस्य लक्ष्मीः (ढ)। तथा हि—

* आर्य्य ! शोभनं मन्त्रयसे। अन्यदपि किमपि प्रष्टुकामोऽस्मि।

† सर्व्वथा निगूढमपि वानराणां षाड्गुण्यं कथमार्य्येण प्रतिपन्नम् ?

भावः, रत्नाकरः रत्नानाम् आकरः, उत्पत्तिस्थानमित्यर्थः, भवति। स्वातिनक्षत्रयोगे मेघात् जलं समुद्रमध्यवर्त्तिशुक्तिषु पतितं मौक्तिकं भवतीति प्रसिद्धिरनुसन्धेया। प्रतिवस्तूपमाऽलङ्कारः, उक्तञ्च दर्पणे—"प्रतिवस्तूपमा सा स्यात् वाक्ययोर्गम्यसाम्ययोः। एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथक्।" इति। वसन्ततिलकं वृत्तम् ॥ ८ ॥

(छ) किञ्च अपरञ्च। दीप्यमानाः यस्य करिष्यन्तः।

(ज) उपादत्ते गृह्णाति, आश्रयतीत्यर्थः।

(झ) निगूढम् अतिगुप्तम्।

(ञ) षाड्गुण्यं षण्णां गुणानां सन्ध्यादीनां प्रयोग इत्यर्थः; "सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः। षड्गुणाः—" इत्यमरः।

(ट) प्रतिपन्नं विदितम्।

(ठ) अयोध्यायात्रायां रामानयनार्थम् अयोध्यागमनकाले इत्यर्थः। समाधि-मयेन योगमयेन।

(ड) प्राभातिकी प्रातःकालीना।

(ढ) लक्ष्मीः शोभा।

प्रत्यग्रज्वलितैः पतङ्गमणिभिर्नीराजिता भानवः
सावित्राः कुरुविन्दकन्दलरुचः प्राचीमलङ्कुर्वते ।
प्रौढध्वान्तकरालितस्य वपुषश्छायाच्छलेन क्षणा-
दप्रक्षालितनिर्मलं जगदहो ! निर्मोकमुन्मुञ्चति ॥ १० ॥

अपि च—

पीत्वा भृशं कमलकुड्मलशुक्तिकोषा
दोषातनीं तिमिरदृष्टिमथ स्फुटन्तः ।
निर्यन्मधुव्रतकदम्बमिषाद्वमन्ति
बिभ्रन्ति कारणगुणानिव मौक्तिकानि ॥ ११ ॥

प्रत्यग्रेति ।—प्रत्यग्रज्वलितैः अभिनवं यथा तथा प्रदीप्तैः, सूर्य्यकरस्पर्शादिति भावः, पतङ्गमणिभिः सूर्य्यकान्तोपलैः, नीराजिताः कृतारात्रिकाः, उत्तेजिताः इत्यर्थः, अत एव कुरुविन्दस्य पद्मरागमणेः, कन्दलवत् नवाङ्कुरवत्, रुक् प्रभा येषां तथाभूताः, सावित्राः सौराः, भानवः रश्मयः, प्राचीं पूर्वां दिशम्, अलङ्कुर्वते शोभयन्ति ; अहो ! आश्चर्य्यं, जगत् क्षणात् अल्पमात्रेण, छायाम् अनातपं, "छाया सूर्य्यप्रिया कान्तिः प्रतिबिम्बमनातपम्" इत्यमरः, तच्छलेन तद्व्याजेन, प्रौढेन उत्कटेन, ध्वान्तेन तिमिरेण, करालितस्य भीषणायितस्य, भयङ्करवत् प्रतीयमानस्येत्यर्थः, वपुषः अवयवस्य, अप्रक्षालितम् अथच निर्मलं निर्मोकं कञ्चुकम्, उन्मुञ्चति त्यजति । अपह्नुतिरलङ्कारः, तदुक्तं दर्पणे—"प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिः" इति । शार्दूलविक्रीडितं वृत्तम् ॥ १० ॥

पीत्वेति ।—कमलानां पद्मानां, कुड्मलाः मुकुलाः, त एव शुक्तिकोषाः मुक्तास्फोटरूपपात्राणि, दोषातनीं नैशीं, तिमिरदृष्टिम् अन्धकाररूपां दृष्टिं, भृशम् अत्यर्थं, पीत्वा अथ अनन्तरं, प्रातरिति भावः, स्फुटन्तः विकसन्तः सन्तः, निर्यन् निर्गच्छन्, यः मधुव्रतकदम्बः भ्रमरवृन्दं, तन्मिषात् तद्व्याजात्, कारणगुणान् कारणस्य दृष्टस्य तिमिरस्य, गुणान् कार्ष्ण्यान् इत्यर्थः, बिभ्रन्तीव दधानानीव, मौक्तिकानि मुक्ताफलानि, वमन्ति उद्गिरन्ति, "कारणगुणाः कार्य्यगुणमारभन्ते" इति न्यायादिति भावः । अत्रापह्नुत्यनुप्राणितोत्प्रेक्षाऽलङ्कारः । वसन्ततिलकं वृत्तम् ॥ ११ ॥

अपि च—

विकसितसङ्कुचितपुनर्विकस्वरेष्वम्बुजेषु दुर्लक्ष्याः ।
कलिकाः कथयति नूतनविकासिनीर्मधुलिहामर्घः ॥ १२ ॥

( आदित्यमवलोक्य )—

कटुभिरपि कठोरचक्रवाको-
त्करविरहज्वरशान्तिशीतवीर्य्यैः ।
तिमिरहतमयं महोभिरन्धन्
जयति जगत्त्रयनेत्रमुष्णभानुः ॥ १३ ॥

तदनुजानीहि मां समिदाहरणाय ।

पद्मसेद्ः । अहं वि खत्तिअकुमाराणं दंसणे उक्कंठिदोम्हि ; ता कहेहि, कहिं पेक्खामि ।*

* अहमपि क्षत्रियकुमारयोर्दर्शनाय उत्कण्ठितोऽस्मि, तत् कथय, कुत्र प्रेक्षे ।

विकसितेति ।—मधुलिहां भ्रमराणाम्, अर्घः पूजा, समादर इति यावत्, "मूल्ये पूजाविधावर्घः" इत्यमरः ; विकसितानि विकाशं गतानि, पुनः सङ्कुचितानि निमीलितानि, रात्राविति भावः, पुनः विकस्वराणि प्रफुल्लानि, सूर्य्योदयादिति भावः तेषु, अम्बुजेषु पद्मेषु, दुर्लक्ष्याः अविनवाः पुरातनीर्वा एता इति अवधारयितुमशक्याः, कोषाणामिति शेषः, कलिकाः कोरकाः, नूतनविकासिनीः नवविकस्वराः, विकाशोन्मुखीरित्यर्थः, कथयति सूचयति, प्रकाशयतीति यावत्, पुरातनीषु पीतत्वेन मधुनः अभावात् भ्रमरास्तत्र न वसन्ति, नवासु च मधुप्राचुर्य्यात् भ्रमराणां तत्रादर इति भावः । आर्य्या वृत्तम् ॥ १२ ॥

कटुभिरिति ।—अयम् उदयोन्मुखः, उष्णभानुः सूर्य्यः, कटुभिरपि दुःसहैरपि, कठोरः दारुणः, दुर्विषह इत्यर्थः, यः चक्रवाकोत्कराणां चक्रवाकवृन्दानां, विरहः नेत्रविच्छेदः, तेन यः ज्वरः सन्तापः, तस्य शान्त्या उपशमेन, शीतं शीतलं, सौम्यमित्यर्थः, वीर्य्यं येषां तादृशैः, महोभिः तेजोभिः, मयूखैरिति यावत्, तिमिरहतम् अन्धकारविनष्टं, जगतां नयनौघं नेत्रसमूहम्, अन्धन् अर्थं कुर्वन्,विस्पष्टमित्यर्थः,अनेन अनष्टदृष्टिशक्तिं पुनरानयन् इति भावः, जयति राजते । पुष्पिताग्रा वृत्तम्—"अयुजि नयुगरेफतो यकारो युजि तु न-जौ ज-र-गाश्च पुष्पिताग्रा" इति लक्षणात् ॥ १३ ॥

शुन:शेफ.। (विहस्य)। नन्वेतावेव यज्ञवाटमुत्तरेण विहार-भूमिषु (क) क्रीडतः; तदुपेत्य निःशङ्कमवलोकय।

(इति निष्क्रान्तौ)।

(विष्कम्भकः (ख))।

(ततः प्रविशतो राम-लक्ष्मणौ)।

रामः। अहो। विचित्रमिदमायतनं (ग) सिद्धाश्रमपदं नाम भगवतो गाधिनन्दनस्य—

तत्तादृक् तृणपूलकोपनयनक्लेशाच्चिरद्वेषिभि-
र्मेध्या वत्सतरी विहस्य वटुभिः सोल्लुण्ठमालभ्यते।
अप्येष प्रतनूभवत्यतिथिभिः सोच्छ्वासनासापुटै-
रापीतो मधुपर्कपाकसुरभिः प्राग्वंशजन्मानिलः॥ १४॥

(क) यज्ञवाट यागभूमिम्, उत्तरेण यागभूमेरुत्तरस्यां दिशीत्यर्थः। विहार-भूमिषु विचरणप्रदेशेषु।

(ख) विष्कम्भक,—तदुक्तं दर्पणे—"वृत्त-वर्तिष्यमाणानां कथांशानां निदर्शकः। सङ्क्षेपोक्तिस्तु विष्कम्भ आदावङ्कस्य दर्शितः॥ मध्येन मध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजितः॥" इति।

(ग) आयतनं यज्ञस्थानम्, आश्रमप्रदेशो वा।

तदिति।—तत् वत्सतरीनिमित्तमित्यर्थः, तादृशः प्रभूतस्येत्यर्थः, तृणपूलकस्य तृणराशेः, उपनयनम् आहरणं, वत्सतरीभ्यो ग्रासार्थमिति भावः, तेन यः क्लेशः तस्मात् चिरद्वेषिभिः सततविरक्तैरिति यावत्, वटुभिः मुनिबालकैः, विहस्य हास्यं कृत्वा, मेध्या पवित्रा, वत्सतरी द्विहायनी गौः, सोल्लुण्ठं सोपहासं यथा तथा, आलभ्यते हन्यते, आङ्पूर्वकस्य लभधातोर्वधार्थत्वात्, वत्सतरीहननम् अतिथिपरिचर्यार्थं विहितम्, तथा च श्रुतिः,—"महोक्षं वा वत्सतरीं दद्यादतिथये गृही" इति। तथा मधुपर्कस्य पाकेन सुरभिः सुगन्धः, एष प्राग्वंशजन्मानिलः हविर्गृहात् पूर्वभागे जातः, अनिलः वायुः अपि, "प्राग्वंशः प्राग्घविर्गृहात्" इत्यमरः, अतिथिभिः अभ्यागतैः, सोच्छ्वासानि उच्छ्वासयुक्तानि, मधुपर्कस्य सुगन्धग्रहणाय नासाकर्षितवायुनोत्थितैः, यानि नासापुटानि तैः, आपीतः सम्यक् पीतः, आघ्रात इति यावत्, प्रतनूभवति स्वल्पीभवति। शार्दूलविक्रीडितं वृत्तम्॥ १४॥

कञ्चुकी। आर्य्ये! किलात्रैव—

देवः कौस्तुभकिञ्जल्कनीलोत्पलमसौ हरिः।
स्वयं किमपि तत्तेपे तपः कपटवामनः॥ १५॥

इत्थमेतन्महातीर्थमध्यासीना द्विजातयः।
अकुतोभयसञ्चाराः षट्कर्माणि प्रयुञ्जते॥ १६॥

(अन्यतश्च दृष्ट्वा)। आर्य्ये!—

पश्यैते पशुबन्धवेदिवलयैरौदुम्बरैर्दन्तुरै-
र्नित्यव्यञ्जितगृह्यतन्त्रविधयो रम्या गृहस्थाश्रमाः।
यत्रामी गृहमेधिनः प्रचलितस्वाराज्यसिंहासना
वैतानेषु कपोटयोनिषु पुरोडाशं वषट्कुर्वते॥ १७॥

देव इति।—कौस्तुभः नारायणवक्षःस्थितमणिविशेषः एव, किञ्जल्कः केसरः यस्य तादृशं, "किञ्जल्कः केसरोऽस्त्रियाम्" इत्यमरः, नीलोत्पलं नीलोत्पलसदृशवर्ण इत्यर्थः, रूपकमलङ्कारः, असौ देवो हरिः विष्णुः, कपटवामनः मायाकल्पितखर्वदेहः सन्, स्वयं किमपि अनिर्वचनीयं, तत् प्रसिद्धं, तपः चान्द्रायणादिकं व्रतं, तेपे चचार। अनुष्टुप् वृत्तम्॥ १५॥

इत्थमिति।—द्विजातयः ब्राह्मणाः, इत्थम् अनेन प्रकारेण, वामनतपश्चरणेन हेतुनेति यावत्, महातीर्थम् अतीव पुण्यस्थानम्, एतत्, संवसितमिति शेषः, अध्यासीनाः अधिवसन्तः, अकुतोभयः निर्भयः, सञ्चारः येषां तथाभूताः निःशङ्कसञ्चारिणः सन्तः, षट्कर्माणि "अध्यापनमध्ययनं यजनं याजनं तथा। दानं प्रतिग्रहश्चैव ब्राह्मणः परिकल्पयेत्॥" इति मनूक्तानि अध्यापनादीनि, प्रयुञ्जते प्रकुर्वन्ति। अनुष्टुप् वृत्तम्॥ १६॥

पश्येति।—पश्य अवलोकय, एते गृहस्थाश्रमाः गार्हस्थ्यधर्माः, पशुबन्धो यागविशेषः, यागार्थं पशुबन्धनं वा, तस्य वेदिः परिष्कृता भूमिः, "वेदिः परिष्कृता भूमिः" इत्यमरः; तद्वलयैः मण्डलाकारवेदिभिरित्यर्थः, औदुम्बरैः उदुम्बरकाष्ठनिर्मितसर्पफणाकारस्रुपात्रविशेषैः, दन्तुरैः उन्नतानतैः सद्भिः, नित्यं सततं, व्यञ्जिता प्रकटिता, गृह्यतन्त्रविधयः गृह्यसूत्रोक्तविधानानि येषु तथाविधाः, अत एव रम्याः मनोहारिणः, दृश्यन्ते इति शेषः; यत्र येषु गृहस्थाश्रमेषु, अमी गृहमेधिनः गृहाणि दाराः, "न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते" इति स्मरणात्; तैः मेधन्ते

राम:। (सहर्षं स्मितम्)। वत्स! इतोऽपि तावत् कृतार्थय (द) चक्षुषी। प्रसन्नपावन: (ध) अयमृषीणां समवाय: (न)। इदममीषां—

पूरयित्वेव सर्वाङ्गमतिरिक्ताः शिराततीः।
जटारूपेण बिभ्राणैः शिरोभिर्गहनं सदः॥ १८॥

किञ्च—

तपःकृशतरैरङ्गैः स्रष्टुमाकारितैरिव।
सायं प्रातरमी पुण्यमग्निहोत्रं प्रयुञ्जते॥ १९॥

(इति परिक्रामत:)।

---

सवन्वन्ते इति तवोक्ता:, सपत्नोका: गृहिण इत्यर्थ:, प्रचलितं प्रकम्पितं, स्वाराज्यस्य स्वर्गराज्यस्य, सिंहासनं येभ्य: तथाभूता: सन्त:, यागस्य स्वर्गफलकत्वादिति भाव:, वैतानेषु यज्ञीयेषु, कपोटयोनिषु अग्निषु, "अग्निर्वैश्वानरो वह्नि:···कपोटयोनिर्ज्वलन:" इत्यमर:; पुरोडाशं हव्यं, वषट्कुर्वते जुह्वति। शार्दूलविक्रीडितं वृत्तम्॥ १७॥

(द) कृतार्थयाव: सफलीकुर्व:।

(ध) प्रसन्नपावन: प्रसन्न: सौम्य:, पावन: पवित्रताजनकश्चेत्यर्थ:।

(न) समवाय: समाज:।

पूरयित्वेति।—अमीषाम् ऋषीणाम् इदम् इति गद्यस्थेनान्वय:; सद: सभा, गोष्ठीत्यर्थ:, सर्वाङ्गं पूरयित्वेव अतिरिक्ता: अधिका:, सर्वाङ्गव्यापनानन्तरं या अधिका: सन्ति ता इत्यर्थ:, शिराततो: शिरासमूहान्, जटारूपेण जटाव्याजेन, बिभ्राणै: दधानै:, शिरोभि: गहनं निविड़ं, सङ्कुलमिति शेष:। अनुष्टुप् वृत्तम्॥ १८॥

तप इति।—अमी ऋषय:, तपोभिश्चान्द्रायणादिभि:,कृशतरै: अतीव कृशैरित्यर्थ:, अस्थिचर्मावशिष्टैरिति भाव:, अत एव स्रष्टुं निर्मातुम, आकारितैरिव आह्वतैरिव, आनीतैरिवेति यावत्, अङ्गै: उपलक्षिता इति विशेषणे तृतीया; यथा चित्र-लिखनादौ प्रथमं रेखा क्रियते, तत: वर्णिकाभि: पूरणं क्रियते, तद्वत् एतानि: अस्थिचर्ममात्राणि अङ्गानि रक्तमांसादिभि: पूरयितुमिवेति भाव:, सायं प्रात पुण्यं पवित्रम, अग्निहोत्रं यज्ञविशेषं, प्रयुञ्जते कुर्वते, ''सायं जुहुयात् प्रातर्जुहुयात् इति श्रुते सायं-प्रातरुभयकालीयहोमविधानात्। अनुष्टुप् वृत्तम्॥ १९॥

लक्ष्मणः। (सहासम्)। आर्य्य! रमणीयमितो वर्त्तते—

बालेयतण्डुलविलोपकदर्थिताभि-
रेताभिरग्निशरणेषु सधर्मिणीभिः।
तन्नासहेतुमपि दण्डमुदस्यमान-
माघ्रातुमिच्छति मृगे मुनयो हसन्ति ॥ २० ॥

रामः। (परिक्रामन् सकौतुकानुरागम्)। वत्स! इतस्तावत्—

आर्द्रप्रसूतिरियमङ्गनयज्ञवेदि-
नेदिष्ठमेव हरिणी हणुते तृणं च।
वत्सीयतापसकुमारकरोपनीत-
नीवारनिर्वृतमपत्यमवेक्षते च ॥ २१ ॥

अपि च—

विष्वक् तपोधनकुमारसमर्प्यमाण-
श्यामाकतण्डुलहृतां च पिपीलिकानाम्।

---

बालेयेति।—अग्निशरणेषु होमगृहेषु, मृगे आश्रमपालिते मृगे, बालेयस्य बलिः पूजा, "बलिः पूजोपहारयोः" इत्यमरः, तस्मै इदं बालेयं तस्य, तण्डुलस्य विलोपेन भक्षणेन, कदर्थिताभिः विरक्तीकृताभिः, मृगैरिति भावः, एताभिः सधर्मिणीभिः सहधर्मचारिणीभिः, मुनिपत्नीभिरित्यर्थः, तत्र भक्षिततण्डुलस्य आश्रमपालितस्य मृगस्य इत्यर्थः, त्रासहेतुमपि भयहेतुमपि, उदस्यमानम् उत्क्षिप्यमाणं, दण्डम् आघ्रातुमिच्छति सति मुनयः हसन्ति, पलायनं दूरापास्त दण्डमाप घ्रातुमा-मुत्क्षिप्यमाणं मन्यमानो जिघ्रतीति हासकारणं, तपोवनस्य शान्तत्वेन निःशङ्कत्वमिति च ध्वन्यते। वसन्ततिलकं वृत्तम् ॥ २० ॥

आर्द्रेति।—आर्द्रा अभिनवा, प्रसूतिः प्रसवो यस्याः तथोक्ता सद्यःप्रसूतेत्यर्थः, इयं हरिणी अङ्गनयज्ञवेदिनेदिष्ठमेव अतिसन्निकटभूमिसन्निहितमेव, तृणं हणुते भक्षयति च, वत्सीयाः वत्सेभ्यः हिताः, मृगशिशुषु स्नेहपरायणा इत्यर्थः, ये तापसकुमाराः तेषां करैः उपनीतेन दत्तेन, नीवारेण धान्यविशेषेण, निर्वृतं तृप्तम्, अपत्यं वत्सम्, अवेक्षते च पश्यति च। वसन्ततिलकं वृत्तम् ॥ २१ ॥

श्रेणीभिराश्रमपथाः प्रथमानचित्र-
पत्रावलीवलयिनो मुदमुद्वहन्ति ॥ २२ ॥

लवः। अहो! पशूनामप्यपत्यवात्सल्यम्!! (प) अहो! शिशूनामपि सत्त्वधर्मताच्छील्यम्!! (फ)

रामः। (अन्यतोऽवलोक्य)।—

मुनिविनियोगविलूनप्ररूढमृदुशाद्वलानि बर्हींषि।
गोकर्णतर्णकोऽयं तर्णोत्युपकण्ठकच्छेषु ॥ २३ ॥

(इति परिक्रामतः)।

लवः। आर्य्य!—

इयमेभिरालवालैः पदे पदे यन्त्रितासु कुल्यासु।
तीव्रतमा जलवेणिः प्रवहति विश्रम्य विश्रम्य ॥ २४ ॥

---

विष्वगिति।—आश्रमपथाः तपोवनमार्गाः, तपोवनकुमारैः ऋषिबालकैः, समर्प्यमाणान् दीयमानान्, श्यामाकतण्डुलान् श्यामाकाख्यतृणधान्यजातान् तण्डुलान्, चरन्ति भक्षयन्तीति तथोक्तानां, पिपीलिकानां श्रेणीभिः विष्वक् समन्तात्, प्रथमानाः विस्तारं गच्छन्त्यः, चित्राः मनोज्ञाः, याः पत्रावल्यः पत्ररचनाविशेषाः, तासां वलयं मण्डलं, तद्वन्तः सन्तः, मुदम् आनन्दम्, उद्वहन्ति जनयन्तीत्यर्थः। वसन्ततिलकं वृत्तम् ॥ २२ ॥

(प) अपत्यवात्सल्यं सन्तानेषु स्निग्धता।

(फ) सत्त्वमिति।—सत्त्वेषु साधुषु, धर्मेषु दयादिरूपेषु, ताच्छील्यं तत्स्वभावत्वम्, आसक्तिरित्यर्थः।

मुनीति।—अयं गोकर्णतर्णकः मृगविशेषस्य सद्योजातशावकः, "गोकर्णोऽश्वतरेऽपि स्यान्मृग-सर्पविशेषयोः" इति मेदिनी। "सद्योजातस्तु तर्णकः" इत्यमरः; उपकण्ठकच्छेषु, सन्निहितनदीतटेषु, "कच्छो नदीतटेऽनूपे" इति विश्वः; मुनीनां विनियोगार्थं यज्ञकर्मणि व्यवहारार्थमित्यर्थः, विलूनानि छिन्नानि, ततः प्ररूढानि पुनः सञ्जातानि, मृदूनि कोमलानि, शाद्वलानि हरितानि इति यावत्, बर्हींषि कुशान्, तर्णोति खादति इत्यर्थः। आर्या वृत्तम् ॥ २३ ॥

इयमिति।—इयं तीव्रतमा अतिवेगवती, जलवेणिः जलप्रवाहः, वेणीरूपं जलं वा, सूक्ष्मप्रवाहत्वेन कुटिलगामित्वेन चेति भावः, एभिः परिदृश्यमानैः, आलवालैः जलधारणार्थं वृक्षमूलस्थ-मृत्तिकारचित जलाधारवेष्टनैः, पदे पदे स्थाने स्थाने,

रामः। वत्स! साधु दृष्टम्—

आलवालवलयेषु भूरुहां
मांसलं स्तिमितमन्तराऽन्तरा।
केरलीचिकुरभङ्गिभङ्गुरं
सारणीषु पुनरम्बु दृश्यते ॥ २५ ॥

तदेहि, भगवतीं कौशिकीमालोकयन्तौ मुहूर्त्तमात्रमात्मानं पुनीवहे (च)। (परिक्रम्यावलोक्य च)। क्वचित् साङ्ग्रामिकोऽपि विशेषो नैसर्गिकमतिशेते। तथा हि—

जडस्वच्छस्वादुप्रकृतिरुपहृतेन्द्रियगणो
गुणो यद्यप्यासामयमयुतसिद्धो विजयते।
तथाऽप्युत्कर्षाय स्फुरति सरितामाश्रमसदा-
मिदानीं वानीरद्रुमकुसुमजन्मा परिमलः ॥ २६ ॥

---

ग्रन्थितासु पर्वतीषु, ग्रन्थियुक्तवत् परिदृश्यमानासु इत्यर्थः, स्रोतोविघ्नकरीष्विति भावः, कुल्यासु स्वल्पकृत्रिमसरित्सु, "कुल्याऽल्पा कृत्रिमा सरित्" इत्यमरः, विश्रम्य विश्रम्य स्थित्वा स्थित्वा, प्रवहति वहन्तीत्यर्थः। प्रतीयमानोत्प्रेक्षा। आर्य्या वृत्तम् ॥ २४ ॥

आलेति।—भूरुहां वृक्षाणाम्, आलवालवलयेषु वृक्षमूलवर्त्तिवलयाकार-जलाधारसमूहेषु, अन्तरा अन्तरा मध्ये मध्ये, मांसलं प्रचुरं, स्तिमितं निश्चलम्, तथा सारणीषु अल्पनदीविशेषेषु, "अल्पनद्याञ्च सारणी" इति विश्वः; पुनः किन्तु, केरली केरलदेशीया कामिनी, तस्याश्चिकुराणां केशानां, भङ्गिवत् कुटिलतेव, भङ्गुरं कुटिलम्, अम्बु जलं, दृश्यते। केरलीनां केशाः कुटिला इति प्रसिद्धिः। रथोद्धता वृत्तं, "रात् परैर्न-र-ल-गै रथोद्धता" इति तल्लक्षणात् ॥ २५ ॥

(च) कौशिकीं नदीविशेषम्। पुनीवहे पवित्रीकुर्वः।

जडेति।—आसां सरितां नदीनां, जडा शीता, स्वच्छा निर्मला, स्वादी सुस्वादा, प्रकृतिः स्वभावो यस्य तथाभूतः, तथा उपहृतः आहृतः, आकृष्ट इति यावत्, इन्द्रियगणः इन्द्रियसमूहो येन तथाविधः, शैत्य-स्वादुत्वाद्युपभोगायेति भावः, अयम् अयुतसिद्धः अयोनिसिद्धः, गुणान्तरामिश्रत्वेन स्वतःसिद्ध इत्यर्थः, स्वाभाविक इति यावत्, गुणः

वटवः। आर्य्ये! पुरस्तादनुकौशिकीतीरम् (अ) आलोकय—

तैर्मेधाजननव्रतप्रणयिभिर्व्यूहैर्बटूनामियं
स्निग्धा नित्यवसन्तविभ्रमवती रम्या पलाशावली।
एतस्यां हरिणारिपाणिजरुचिश्रेणिश्रियः कोरका
गोपायन्ति तपोवनं वनकरिक्रीडाकराकर्षणात् ॥ २७ ॥

(नेपथ्ये)।

रामभद्र! कियच्चिरमवलोकनेन कृतार्थीक्रियन्ते (ब) तपोवनविहारभूमयः? सम्प्रति हि—

परिणमयति ज्योतिर्वृत्त्या यजूंषि ऋचां पतिः
किमपि शमिनः सावित्राख्यं रहस्यमुपासते।

---

यद्यपि विजयते सर्वोत्कर्षेण वर्त्तते, तथाऽपि इदानीम् आश्रमसदाम् आश्रमवासिनाम्, उत्कर्षाय परितोषायेत्यर्थः, वानीरद्रुमाणां नदीतीरवर्त्तिनां वेतसतरूणां, कुसुमैः कान्त उत्पत्तिर्यस्य तादृशः, परिमलः सौरभं, पूर्वोक्तगुणविशिष्ट इति भावः, स्फुरति प्रसरति। शिखरिणी वृत्तम् ॥ २६ ॥

(अ) पुरस्तात् अग्रतः। अनुकौशिकीतीरं कौशिक्याः नद्याः तीरसमीपम्।

तैरिति।—मेधा धारणावती बुद्धिः, "धीर्धारणावती मेधा" इत्यमरः; तस्याः जननाय उत्पादनाय, यत् व्रतं नियमः, तत्प्रणयिभिः तदासक्तैरित्यर्थः, तैः पूर्वोक्तैः, बटूनां मुनिबालकानां, व्यूहैः समूहैः, स्निग्धा जलैरार्द्रीकृता, अत एव नित्यः सन्ततः, सार्वकालिक इत्यर्थः, यो वसन्तविभ्रमः वासन्तिकविलासः, वासन्तिकत्वेन विशिष्टश्रीर्वा तद्वती, रम्या मनोज्ञा, इयं पलाशावली पलाशतरुश्रेणी, दृश्यते इति शेषः, एतस्याः पलाशावल्याः, हरिणारिः मृगशत्रुः, सिंहः इत्यर्थः, तस्य पाणिजाः नखरा एव, रुचिश्रेणयः अङ्कुरावल्यः, तासां श्रीरिव श्रीर्येषां तथोक्ताः, कोरकाः कलिकाः, "कलिका कोरकः पुमान्" इत्यमरः; वनकरिणाम् आरण्यगजानां, क्रीडया क्रीडार्थमित्यर्थः, यत् करैः शुण्डादण्डैः, आकर्षणं तस्मात्, तपोवनं गोपायन्ति रक्षन्ति, वनकरिणस्तादृशीं पलाशकलिकां पश्यन्तः इदं सिंहनखरम् मन्यमानाः पलायन्ते इति भावः। मेधाजननव्रतं छन्दोगब्रह्मचारिभिः क्रियते, तत्र कालेन पलाश-मूलसेचनं विहितमिति वेदविदां समाचारः प्रसिद्धः। शार्दूलविक्रीडितं वृत्तम् ॥ २७ ॥

(ब) कृतार्थीक्रियन्ते सफलीक्रियन्ते।

गुरुरयमनुष्ठाय माध्यन्दिनीं सवनक्रिया-

मिह मखविधौ नेदीयांसं भवन्तमपेक्षते ॥ २८ ॥

रामः। (आकूतमभिनीय सानुरागम्)।—

वारांस्त्रीनभिमुखयन्ते विदधते वन्यैः शरीरस्थिती-

रैणेय्यां त्वचि संविशन्ति वसते चापि त्वचस्तारवीः।

तत् पश्यन्ति च धाम नाभिपततो यच्चार्मणे चक्षुषो

धन्यानां विरजस्तमा भगवती चर्य्येयमाह्लादते ॥ २९ ॥

( नेपथ्ये पुनस्तदेव पठ्यते )।

---

परिचमयतीति।—रुचां पतिः प्रभाकरः, ज्योतिर्हंस्या तेजोरूपेण, तेजस्स्वरूपेणेत्यर्थः, प्रभाविकीरणेनेति भावः, यजूंषि यजुर्वेदान्, परिचमयति परिचितानि करोति, यजूरूपं दधातीति भावः, तथा च पुराणम्—"ऋग्भिः प्रातरादित्यो मध्याह्ने च यजुर्मयः। सायं साममयश्चेति त्रयीमय उदाहृतः॥" इति, श्रमिनः श्रमगुणप्रधानाः मुनयः, किमपि अनिर्वचनीयं, सावित्राख्यं सावित्रनामधेयं, रहस्यं तत्त्वम्, उपासते आराधयन्ति; आदित्यमन्त्रं जपन्तीत्यर्थः, अयं गुरुः आचार्यः विश्वामित्रः, माध्यन्दिनीं माध्याह्निकीं, सवनक्रियां स्नानविधिम्, अनुष्ठाय अनुष्ठानं निष्पाद्य, इह अस्मिन्, मखविधौ यागविधाने, भवन्तं नेदीयांसं निकटवर्त्तिनम्, अपेक्षते प्रतीक्षते, स्वसमीपे भवदागमनं प्रतीक्षते इत्यर्थः। हरिणी वृत्तं—"न स-म-र-स-ला गः षड्वेदैर्हयैर्हरिणी मता" इति लक्षणात् ॥ २८ ॥

वारानिति।—अत्र ये इत्यध्याहार्य्यं, ये त्रीन् वारान् वारत्रयम्, अभिमुखयन्ते स्नान्ति, "सवेदभिषवः स्नाने" इति विश्वः, वन्यैः वनजातैः, फलमूलादिभिरिति शेषः, शरीरस्थितीः देहयात्रानि, जीवनरक्षणानीत्यर्थः, विदधते कुर्वन्ति, ऐणेय्यां मृगसम्बन्धिन्यां, त्वचि चर्मणि, संविशन्ति स्वपन्ति, तारवीः तरुसम्बन्धिनीः, त्वचः वल्कलानीत्यर्थः, वसतेऽपि च आच्छादयन्ति च, किञ्च, चार्मणे चर्ममये, चक्षुषि यत् यत्रेत्यर्थः, न अभिपततः न गच्छतः, चर्मचक्षुषा यत् न दृश्यते इति भावः, तत् धाम तेजः, परमात्मतत्त्वमित्यर्थः, पश्यन्ति च, अतः धन्यानां श्लाघ्यानां, तेषामिति शेषः, पूर्वोक्तरूपाणां पुण्यवतां तेषां तपस्विनामित्यर्थः, इयं भगवती माहात्म्यवती, सर्वसामर्थ्यविधायिनीति भावः, विरजस्तमा रजस्तमोभ्यामस्पृष्टेत्यर्थः, सात्त्विकीति यावत्, चर्या अनुष्ठानमित्यर्थः, आह्लादते सुखयतीत्यर्थः, अन्तर्भावितण्यर्थोऽयं प्रयोगः। शार्दूलविक्रीडितं वृत्तम् ॥ २९ ॥

रामः। (श्रुत्वा सहर्षमूर्द्धमवलोक्य च)। कथं गगनमध्यमध्यारूढो निदाघदीधितिः!! (म) वत्स! तदेहि, यज्ञवाटमधिष्ठाय क्रमेण कृताह्निकस्य भगवतः कौशिकस्य प्रत्यनन्तरीभवावः (य)।

(इति परिक्रामतः)।

लक्ष्मणः। (सर्वतो दृष्ट्वा)। आर्य्य!—

उद्दामद्युमणिद्युतिव्यतिकरप्रक्रीडदर्कोपल-
ज्वालाजालजटालजाङ्गलतटीनिष्कूजकोयष्टयः।
भौमोष्मप्लवमानसूर्य्यकिरणक्रूरप्रकाशा दृशा-
माविष्कर्म समापयन्ति धिगमूर्मध्याह्नशून्या दिशः॥ १०॥

(म) निदाघाः उष्माः, "निदाघो ग्रीष्मकाले स्यादुष्णस्वेदाम्बुनोरपि" इति मेदिनी; दीधितयः रश्मयो यस्य सः निदाघदीधितिः उष्णरश्मिः, सूर्य्य इत्यर्थः।

(य) प्रत्यनन्तरीभवावः समीपे वर्तावहे इत्यर्थः।

उद्दामेति।—उद्दामा उत्कटा, या द्युमणिद्युतिः सूर्य्यतेजः, तस्याः व्यतिकरेण सम्पर्केण, प्रक्रीडता विहरता, प्रज्वलतेति यावत्, अर्कोपलानां सूर्य्यकान्तमणीनां, ज्वालाजालेन प्रभासमूहेन, जटाला सम्बद्धा, या जाङ्गलतटी निर्जलप्रदेशः, "जाङ्गलं निर्जलस्थानम्" इति धरणिः, तत्र निष्कूजाः कूजनरहिताः, निःशब्दा इति यावत्, कोयष्टयः टिट्टिभाः यासु तथोक्ताः, "कोयष्टिकष्टिट्टिभकः" इत्यमरः; भौमे पार्थिवे, ऊष्मणि सन्तापे, प्लवमानैः सन्तरद्भिः, संसृजद्भिरिति यावत्, सूर्य्यकिरणैः क्रूराः दारुणाः, दह्यवत् प्रतीयमानत्वात् दुःसहा इति यावत्, प्रकाशाः यासां तथाभूताः, मध्याह्ने दिवसमध्यभागे, शून्याः सौरतेजःप्रतिघातात् दर्शनाक्षमा इति यावत्, यद्वा—शून्याः निर्जनाः, जनसमागमविरहिता इत्यर्थः, "शून्यं बिन्दौ च निर्जने" इति हेमः; प्रखरसूर्य्यतापासहिष्णुतया इति भावः, अमूः दिशः "मध्येऽह्नि शून्या दिशः" इति पाठान्तरम्; दृशोः नेत्रयोः, आविष्कर्म आविष्कारं, दर्शनव्यापारमित्यर्थः, प्रसारणमिति यावत्, समापयन्ति विघ्नन्तीत्यर्थः, प्रखरातपे दृष्टिशक्तिप्रतिघातादिति भावः, अतो धिक् निन्दायां, "धिङ् निर्भर्त्सननिन्दयोः" इत्यमरः; एता दिशः निन्द्या इत्यर्थः। "आविष्कर्म" इत्यत्र "आयुष्कर्म" इति

श्रान्ततमा (र) चेयं यज्ञवाटभूमिः, तदेतदेव न्यग्रोधच्छायामण्डपम् (ल) अध्यासीना ऋत्विजः प्रत्यवेक्षावहे (व)। गलितयौवने (श) पुनरहनि भगवन्तं द्रक्ष्यावः।

रामः। एवमस्तु।

(इति परिक्रम्य नाट्येनोपविशतः)।

लक्ष्मणः। (पार्श्वतोऽवलोक्य)। आर्य्य!—

मध्ये व्योम क्रीड़यित्वा मयूखान्
भानोर्बिम्बे लम्बमाने क्रमेण।
स्वैरं स्वैरं मूलतः पादपानां
पश्य च्छायाः कश्चिदाकर्षतीव ॥ २१ ॥

रामः। (समन्तादवलोक्य)। वत्स! मध्यन्दिनमतिक्रान्तम् (ष) इति दिनमप्यतिक्रान्तमेव। पश्य—

---

पाठे—आयुष्मन्तं प्राणधारणोपयोगिव्यापारशालिनमित्यर्थः। आर्द्रार्द्रकौचितं कुरुत ॥ २० ॥

(र) श्रान्ततमा अतिशयक्लेशवर्त्तिनी।

(ल) न्यग्रोधेति।—न्यग्रोधः वटः, "न्यग्रोधो बहुपाद् वटः" इत्यमरः; तस्य छाया एव मण्डपं गृहं तत्।

(व) प्रत्यवेक्षावहे पश्यावः।

(श) गलितयौवने अतीततारुण्ये, विगतमध्यभागे इत्यर्थः, प्रथमितमतीतायाम् इति भावः। अहनि अपराह्णे इत्यर्थः।

मध्ये इति।—मध्ये व्योम्न आकाशमध्ये, मयूखान् करान्, क्रीडयित्वा खेलयित्वा, भानोः सूर्य्यस्य, बिम्बे मण्डले, क्रमेण लम्बमाने स्खलमाने सति, पश्चाद्भागमधिपतति सतीत्यर्थः, कश्चित् जनः पादपानां वृक्षाणां, छायाः मूलतः मूलदेशात्, स्वैरं स्वैरं मन्दं मन्दम्, आकर्षं नेव आकृष्य नयतीव, पश्य अवलोकय। शालिनी वृत्तं— "मात्तौ गौ चेत् शालिनी वेदलोकैः" इति लक्षणात् ॥ २१ ॥

(ष) अतिक्रान्तम् अतीतम्।

लक्ष्मणः। (विहस्य)। कथं रजनीचरचक्रविनाशोत्कण्ठाविसंष्ठुलमार्य्यहृदयमदीर्घदर्शिनं भगवन्तं कौशिकमपि सम्भावयति !! (ग)—

अविद्याबीजविध्वंसादयमार्षेण चक्षुषा।
कालौ भूत-भविष्यन्तौ वर्त्तमानमवीविशत्॥ २४॥

रामः। किमुच्यते, तत्रभवान् विश्वामित्रः,—

प्रज्ञातब्रह्मतत्त्वोऽपि स्वर्गीयैरेष खेलति।
गृहस्थसमयाचारप्रक्रान्तैः सप्ततन्तुभिः॥ २५॥

---

भावः। राक्षसकुलं समूलघातं हन्तुमद्य कश्चित् राक्षसविनाशरूपपुण्यादभावयतु इति निष्कर्षः॥ २३॥

(ग) रजनीति।—रजनीचराणां राक्षसानां, चक्रस्य समूहस्य, विनाशाय या उत्कण्ठा उत्कलिका, व्यग्रता इति यावत्, तया विसंष्ठुलं विवशं, व्याकुलमित्यर्थः, अत एव अदीर्घदर्शिनम् अदूरदर्शिनमित्यर्थः। आर्य्यहृदयम् आर्य्यस्य रामस्य हृदयम्। अयं भावः,—भगवान् कौशिकः राक्षसविघ्नासहनात् रामेण विनाशयति जानन्नपि कथं तदर्थमुत्कण्ठितमर्थं व्यनक्त्यस्यादीर्घदर्शित्वमिति भावः। यद्वा—विसंष्ठुलमिति आर्य्यहृदयस्य विशेषणम्; तत्र आयमर्थः,—राक्षसविनाशार्थमतिव्यग्रत्वात् आर्य्यहृदयं महाप्रभावस्य विश्वामित्रस्य प्रभावं विस्मृत्य यत् धनुर्ग्रहणाय उद्योजयति, तेन तस्य अदीर्घदर्शित्वं प्रमाणयतीव, वस्तुतस्तु धनुर्ग्रहणस्य प्रयोजनमेव नास्ति, भगवतः प्रभावेणैव राक्षसध्वंसरूपकार्य्यनिष्पादनादिति भावः।

(घ) अविद्येति।—अयं विश्वामित्रः, अविद्या अज्ञानं, तस्या बीजं मूलं, रजस्तमसोरन्यतरमित्यर्थः, तस्य विध्वंसात् विनाशात्, सत्त्वोद्रेकादिति भावः, आर्षेण ज्ञानमयेन, चक्षुषा भूत भविष्यन्तौ अतीतानागतौ, कालौ वर्त्तमानं कालम् अवीविशत् प्रवेशयामास, भूतं भाविनञ्च कालं वर्त्तमानत्वेन परिणमयामासेत्यर्थः, त्रिकालज्ञोऽयमिति भावः। अनुष्टुप् छन्दः॥ २४॥

प्रज्ञातेति।—प्रकर्षेण ज्ञातमित्यर्थः, ज्ञातं विदितं, ब्रह्मतत्त्वं परमार्थतत्त्वं येन तथोक्तः अपि, एषः विश्वामित्रः, स्वर्गीयैः स्वर्गहितैः, स्वर्गसाधनैरिति यावत्, गृहस्थानां समय नियमः, तस्य आचारेण आचरणेन, प्रक्रान्तैः प्रारब्धैः, सप्ततन्तुभिः यज्ञैः, "यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः" इत्यमरः; खेलति क्रीडति;

विश्वामित्रः। ( परिक्रामन् सहर्षम् )। हन्त ! कृतकृत्यप्रायमात्मानं पश्यामः। यतः,—

निर्वृत्तो बहु तावदध्वरभुजामातर्पणोऽयं विधि-
र्दायादेन समं सुकेतुदुहिता चाद्यैव घानिष्यते।
पाणौकृत्य पुनर्वृषध्वजधनुर्भङ्गैकशुल्कां वधू-
मैक्ष्वाके सुरकार्यदिक्षु चरति स्वास्थ्यं विधातास्महे ॥ १९ ॥

( राम-लक्ष्मणावुपसृत्योपविष्टौ )।

विश्वामित्रः। ( राममतिचिरं निर्वर्ण्य सकौतुकम् )।—

---

विहितस्य, कर्मणः क्रियायाः, यज्ञे अनुष्ठेयस्य इति भावः, व्यसनैः विघ्नैः, तत्तद्-यज्ञीयपरिच्छदैरिति भावः, अविकलोऽखण्डम् अविकलोत्तिमन्तौ, तपसः यत् तेजः ज्योतिः, तन्मयौ तदात्मकौ, लक्ष्मीं श्रियं, पुष्णाति धारयतीत्यर्थः। अनुष्टुप् वृत्तम् ॥ १८ ॥

निर्वृत्त इति।—अध्वरभुजां देवानाम्, आतर्पणः सम्यक् तृप्तिजनकः, अयं विधिः यज्ञानुष्ठानमित्यर्थः, बहु तावत् विपुलभावेनैव, साकल्येनेत्यर्थः, साङ्गमेव, न तु वैकल्यलेशेन न्यूनमिति भावः, तत् यथा तथा, "यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे" इत्यमरः; निर्वृत्तः सम्पन्नः; च किञ्च, सुकेतुदुहिता ताडका, दायादेन दायं पैतृकं धनम् आदत्ते इति दायादः पुत्रादिः तेन, समं सह, अद्यैव घानिष्यते विनाशयिष्यते, रामेणेति शेषः, पुनः किन्तु, वृषध्वजस्य हरस्य, धनुर्भङ्ग एव, न तु धनादि-रिति भावः, एकः अद्वितीयः, शुल्कः पणः यस्याः तथोक्ताम्, वधूं भार्याम्, जानकीमित्यर्थः, पाणौकृत्य उद्वाह्य, पाणौ गृहीत्वेत्यर्थः, तद्धनुर्भङ्गेन परिणीयेति भावः, ऐक्ष्वाके रामे, सुरकार्याय देवकार्यसाधनाय, रावणविनाशायेति भावः, या दिशः दक्षिणा इत्यर्थः, दक्षिणदिग्वर्तिनः प्रदेशा इति भावः तासु, चरति गच्छति, रावणवधाय दक्षिणां दिशं प्रयाति सतीत्यर्थः, स्वास्थ्यं स्वस्थताम्, विधातास्महे धारयिष्यामः, अनुभविष्याम इत्यर्थः, सुखा भविष्याम इति यावत्। निर्विघ्नं यज्ञसमाप्तिर्भवेन्न वा इति या आशङ्का आसीत्, रामप्रभावेण सा दूरीभूता, यज्ञविघ्नकारिणी ताडकाऽपि अद्यैव रामेण घानिष्यते इति आशङ्काऽपि अचिरमेव दूरीभविष्यति, एवञ्च सर्वविधे अस्मत्ता-पकारणे दूरीभूतेऽपि यावत् रामो रावणकुलविनाशं न प्रयाति, तावत् न सम्पूर्णं स्वास्थ्यं लप्स्याम इति निष्कर्षः। शार्दूलविक्रीडितं वृत्तम् ॥ १९ ॥

एष वैहारिकं वेषमादधानो धनुर्धरः ।
तत्त्वमान्तरमस्माकममृतैरिव सिञ्चति ॥ ४० ॥

कुशः । (सप्रणयम्) । भगवन् ! दाशरथी राम-लक्ष्मणावभिवादयेते ।

विश्वामित्रः । (साभिलाषम्) । वत्सौ ! किमन्यदाशास्महे (ङ)—

युवाभ्यामभिनिर्वृत्त-योगक्षेमस्य वज्रिणः ।
ऐश्वर्य्यप्रक्रियामात्र-कृतार्थाः सन्तु हेतयः ॥ ४१ ॥

(उभौ तूष्णीमधोमुखौ स्तः) ।

विश्वामित्रः । (विहस्य) । वत्सौ ! समन्तादुपशोभितोऽयं सन्निवेशः (च) ? कच्चिदस्मदीयास्तपोवनभूमयो रमयन्ति वाम् ? उपस्नेहयति (छ) वा गार्हस्थ्यम् (ज) महर्षीणाम् ?

---

एष इति।—वैहारिकं विहारसम्बन्धिनं, क्रीडार्थमित्यर्थः, वेषं परिच्छदम्, आदधानः परिदधानः, एष धनुर्धरः रामः, अस्माकम् आन्तरं तत्त्वम् अन्तःकरणम् अन्तरात्मानं वा, अमृतैः सुधाभिः, सिञ्चतीव सिक्तं करोतीव। अनुष्टुप् वृत्तम् ॥ ४० ॥

(ङ) आशास्महे आशिषा पूरयाम इत्यर्थः।

युवाभ्यामिति।—युवाभ्याम् अभिनिर्वृत्तः सुसम्पन्नः, योगः अलब्धलाभरूपः, क्षेमः लब्धस्य रक्षणरूपः, अथवा योगः अपूर्वलाभः, "योगो ध्यानेऽप्यपूर्वलाभे" इति धरणिः, क्षेमः विघ्नाभावेन मङ्गलं यस्य तथाभूतस्य, वज्रिणः इन्द्रस्य, हेतयः अस्त्राणि, वज्रादीनीति भावः, ऐश्वर्य्यं प्रभुत्वं, तस्य प्रक्रियामात्रम् आडम्बरमात्रं, प्रभूणाम् अवश्यधारणीयत्वेन तद्युक्तव्यापारमात्रमिति यावत्, "प्रक्रिया त्वधिकारः स्यात्" इत्यमरः, तेन कृतार्थाः सफलाः, सन्तु भवन्तु, युवाभ्यामेव तत्कार्य्यसमाधानादिति भावः। अनुष्टुप् वृत्तम् ॥ ४१ ॥

(च) उपशोभितः परिहृष्टः इति यावत्, युवाभ्यामिति शेषः। सन्निवेशः आश्रमप्रदेश इत्यर्थः।

(छ) रमयन्ति सुखयन्ति। वां युवाम्। उपस्नेहयति तर्पयति, स्निग्धौ करोतीत्यर्थः।

(ज) गार्हस्थ्यं गृहस्थोचिताचारः।

उभौ। (सप्रश्रयम् (झ))। भगवन्!—

रम्यमेतदरम्यं वा कः परिच्छेत्तुमर्हति?।
किन्तु हृयातिगं चित्तमद्य नौ पश्यतोरभूत्॥ ४२॥

(इति सर्वे यथोचितमुपविशन्ति)।

विश्वामित्रः। (साकूतस्मितम्)। वत्सौ!—

इह वनेषु स कौतुकवामनो
मुनिरतप्त तपांसि पुरातनः।
तमिव वामवलोक्य तपस्विनो
नयनमद्य मनागुदमीमिलन्॥ ४३॥

(उभौ मुहूर्त्तमुन्मनीभवतः (ञ))।

विश्वामित्रः। (स्वगतम्)। अये! किमप्युत्साहवर्द्धनाय प्राग्भवीयम् (ट) अनुस्मारितमन्तःकरणमनयोः; तदेतावदस्तु,

(झ) सप्रश्रयं सविनयम्।

रम्यमिति।—एतत् ऋषीणां गार्हस्थ्यमित्यर्थः, रम्यं मनोज्ञम्, अरम्यम् अमनोज्ञं वा, कः जनः, परिच्छेत्तुं निर्णेतुम्, अर्हति? शक्नोति? न कोऽपीत्यर्थः, किन्तु पश्यतोः अवलोकयतोः, नौ आवयोः, चित्तम् अद्य हृयातिगं रजस्तमोऽतिक्रान्तं, सत्त्वनिष्ठमिति भावः, यद्वा—हृयातिगं रम्यारम्यगोचरातीतं, केनाप्यनिर्वचनीयभावेन भावितमित्यर्थः, अभूत्। अनुष्टुप् वृत्तम्॥ ४२॥

इहेति।—सः प्रसिद्धः, कौतुकवामनः कपटवामनमूर्त्तिः, पुरातनः मुनिः नारायणः, इह एषु, वनेषु अरण्येषु, तपांसि अतप्त तपश्चचार; तपस्विनः मुनयः, अद्य तमिव वामनरूपमिव, वां युवाम्, अवलोक्य दृष्ट्वा, नयनं नेत्रम्, ध्यानमुद्रित-लोचनमिति भावः, मनाक् अल्पं यथा तथा, उदमीमिलन् उन्मीलयन्ति स्म, ध्यानदृष्ट्या तमिव युवां पश्यन्ति स्मेति, ध्यानदृष्ट्या तमिव युवाम् अवलोक्य बाह्यनेत्रे-णाप्यवलोकयितुमीषत् नयनोन्मीलनं कृतवन्तः इति वा भावः। द्रुतविलम्बितं वृत्तं—"द्रुतविलम्बितमाह न-भौ भ-रौ" इति तल्लक्षणात्॥ ४३॥

(ञ) उन्मनीभवतः उत्कण्ठितमानसौ भवतः, पूर्वजन्मवृत्तान्तोद्बोधनेनेति भावः।

(ट) प्राग्भवीयं पूर्वजन्मसम्बन्धम्।

अन्यतः प्रक्षिपामि (ठ)। (प्रत्यगवलोक्य प्रकाशं समवलोक्य।) कथमुदयगिरिकाश्मीरकुङ्कुमकेदारस्य प्रभातसन्ध्यालतायाः प्रथमस्तबको गभस्तिमाली हस्ताहस्तिकया कुतूहलिनीभिर्दिगङ्गनाभिर्वारुणीं यावदुपनीतः (ड)। (सनिर्वेदं च)।—

यातोऽस्तमेष चरमाचलचूडचुम्बी
पङ्केरुहप्रकरजागरणप्रदीपः।
आः! सर्वतः स्फुरतु कैरवमाः! पिबन्तु
ज्योत्स्नाकरम्भमुदरम्भरयश्चकोराः ॥ ४४ ॥

(ठ) अन्यतः प्रक्षिपामि अन्यस्मिन् विषये मनो नयामि।

(ड) उदयेति।—उदयगिरेः उदयाचलस्य, काश्मीरं तद्देशभवं, यत् कुङ्कुमं तस्य केदारस्य क्षेत्रस्य, यद्वा—उदयगिरिरेव काश्मीरकुङ्कुमकेदारः तस्य, प्रभातसन्ध्या प्रातःसन्ध्या एव, लता वल्ली तस्याः, प्रथमस्तबकः प्रथमसञ्जातगुच्छः, कुङ्कुमक्षेत्राभिनवोद्भिन्नगुच्छतुल्य इत्यर्थः, उभयोरेवारुण्यादिति भावः, गभस्तिमाली सूर्यः, हस्ताहस्तिकया एकस्याः हस्ताभ्यामपरस्याः हस्तौ, तस्या अपि हस्ताभ्यामपरस्या हस्तौ इत्येवंरूपया "हाताहाति" इति प्रसिद्धयेत्यर्थः, कुतूहलिनीभिः कौतुकवतीभिः, दिगङ्गनाभिः दिश एव अङ्गनाः नार्यः ताभिः, वारुणीं पश्चिमां दिशं, यावत् प्रतीत्यर्थः, उपनीतः प्रापितः।

यात इति।—पङ्केरुहाणां पद्मानां, प्रकरस्य सङ्घस्य, जागरणाय प्रबोधाय, विकाशायेति यावत्, प्रदीपः प्रदीपतुल्यः, एषः सूर्यः, चरमाचलचूडचुम्बी अस्तगिरिशिखरस्पर्शी सन् अस्तं यातः अदर्शनं गतः, आः! इति कोपसूचकं सन्तापसूचकं वा अव्ययम्; "आः स्मरणेऽप्यङ्गीकारे कोप-सन्तापयोरपि" इति मेदिनी; कैरवं कुमुदं, सर्वतः समन्तात्, स्फुरतु विकसतु, आः! उदरम्भरयः उदरभरणार्थिनः, उदरसर्वस्वा इत्यर्थः, चकोराः पक्षिविशेषाः, ज्योत्स्नाकरम्भं चन्द्रिकारूपं दधिमिश्रसक्तुकं, ज्योत्स्ना-करम्भयोः उभयोरेव धावल्यादिति भावः, "करम्भो दधिसक्तवः" इत्यमरः; पिबन्तु, सर्वलोकपावनः जगच्चक्षुरादित्यः अदर्शनं गतः, दैवाद्यपि कौशिकतस्करादीनि कमलानि च मुदितानि, इदानीं तुच्छकैरवाणाम् उदरसर्वस्वचकोराणाञ्च उत्सवसमयः समागतः इति महतां विपत्तिदर्शनेन क्षुद्राणाञ्चाभ्युदयदर्शनेन कोपः सन्तापो वा आः इत्यव्ययद्वयेन सूच्यते इति मन्तव्यम्। वसन्ततिलकं वृत्तम् ॥ ४४ ॥

किञ्च—

काश्चिद्बिभ्रति भूतिमाश्रमभुवो वैतानवैश्वानर-
ज्वालोत्प्लवमानधूमवलभीविभ्रान्तदिग्भित्तयः।
श्रूयन्ते वटवस्तृतीयसवनस्वाध्यायदीर्घानपि
सन्ध्याबन्धमनोहरं प्रतिमुहुः स्वान् द्राघयन्तः स्वरान् ॥४८॥

विश्वामित्रः। वत्स राघव!—

उन्मुक्ताभिर्दिवसमधुना सर्वतस्ताभिरेव
स्वच्छायाभिर्निचुलितमिव प्रेक्ष्यते विश्वमेतत्।
पर्य्यन्तेषु ज्वलति जलधौ रत्नभानौ च मध्ये
चित्राङ्गीयं रमयति तमःस्तोमलीना धरित्री ॥ ४९ ॥

“कालश्यामलमेचकाः” इत्यमरः; जाताः, निर्वाणाङ्गारा यथा कृष्णवर्णा भवन्ति, तथा सूर्य्यतापदग्धाः पश्चाद्दर्शिताः दिशः सूर्य्यसन्तापनिर्वाणादन्धकारोदयाच्च कृष्णवर्णा दृश्यन्त इति भावः, तु किन्तु, प्रतीची पश्चिमा दिक्, क्रमात् क्रममुद्रया, येन क्रमेण अन्या दिशो मेचकाः जाताः, तं क्रममतिक्रम्येत्यर्थः, समुदाचरति सम्यक् राजते, अस्तोन्मुखस्य सूर्य्यस्य चक्रबिम्बसम्पर्कादिति भावः, सम्यक् बिभेति वा, अन्यासां दिशामवस्थादर्शनादिति भावः, “समुदाचारस्तु शोभायां पूर्वरूपे भयेऽपि च” इति विश्वः। यद्वा—समुदा सहर्षा, रवेरिति शेषः, आचरति, अन्या दिशो मलिना जाताः, प्रतीची तु क्रममुद्रया हृष्टेव आचरतीति निष्कर्षः। “तापनैरेव” इत्यत्र “तापनैरिव” इति पाठः समीचीनः; तथात्वे जाता इवेत्युत्प्रेक्षा। अनुष्टुप् वृत्तम् ॥ ४७ ॥

काश्चिदिति।—आश्रमभुवः तपोवनभूमयः, वैतानस्य यज्ञीयस्य, वैश्वानरस्य अग्नेः, ज्वालायाः शिखायाः, उत्प्लवमानः इतस्ततः सञ्चरन्, यः धूमः स एव वलभी सौधोपरि वर्त्तमानं क्षुद्रगृहं, तत्र विभ्रान्ताः विशेषेण भ्रान्तिं गताः, दिश एव भित्तयः कुड्यानि यासां तथाभूताः सत्यः, काश्चित् अनिर्वचनीयामिति भावः, भूतिं सम्पदं, शोभामित्यर्थः, “भूतिर्भस्मनि सम्पदि” इत्यमरः; बिभ्रति दधति, वटवः ब्राह्मणकुमाराः, तृतीयसवने सायंकालीनस्नाने, यः स्वाध्यायः वेदाध्ययनं, तत्र दीर्घान् अपि उच्चैस्तरान् अपीत्यर्थः, स्वान् निजान्, स्वरान् उदात्तादीन्, प्रतिमुहुः पुनः पुनः, सन्ध्यायाः परस्पराभिगीतायाः, बन्धेन निर्बन्धेन, आग्रहेणेत्यर्थः, मनोहरं मनोज्ञं यथा तथा, द्राघयन्तः अतिदीर्घीकुर्वन्तः, श्रूयन्ते। शार्दूलविक्रीडितं वृत्तम् ॥ ४८ ॥

उन्मुक्ताभिरिति।—एतत् विश्वं जगन्मण्डलं, दिवसं दिवसं व्याप्येत्यर्थः, अधुना-

वानरः । ( सनिर्वेदम् ) ।—

तेजोमयं तमोमयमन्यतरस्यां तदेव दिक्चक्रम् ।
किमपि विचित्रा धात्रा सृष्टिरियं भुवनकोषस्य ॥ ५० ॥

( सर्वतोऽवलोक्य ) ।—

चूडारत्नैः स्फुरद्भिर्विषधरविवराण्युज्ज्वलान्युज्ज्वलानि
प्रेक्ष्यन्ते चक्रवाकीमनसि निविशते सूर्यकान्तात् कृशानुः ।
किञ्चामी शश्वदन्तस्तिमिरमुभयतो निर्भराहस्तमिस्रा-
सङ्घट्टोत्पिष्टसन्ध्याकणनिकरपरिस्पर्द्धिनो भान्ति दीपाः ॥ ५१ ॥

रामः । ( विलोक्य ) ।—

संयोगे द्वितीया ; उन्मुक्ताभिः, परित्यक्ताभिः, सूर्येण तेजसा तिरोहितत्वाददृश्याभिरिति भावः, ताभिरेव याः दिवाऽपि आसन् ताभिरित्यर्थः, स्वच्छायाभिः निजच्छायाभिः, अधुना अस्तमनसमये इत्यर्थः, सर्वतः समन्तात्, निर्मुक्तमिव कवलितमिव, प्रेक्ष्यते दृश्यते, तमसां तिमिराणां, सोमस्य समुद्रस्य, लीलां विलासः, विभवमित्यर्थः यस्यां तथाभूता, इयं धरित्री पृथ्वी, पर्यन्तेषु प्रान्तेषु, जलधौ समुद्रे, पृथिव्याः प्रान्तस्थसमुद्र-चतुष्टये इत्यर्थः, तथा मध्ये मध्यदेशस्थे, रत्नसानौ सुमेरौ च, "मेरुः सुमेरुर्हेमाद्रिः रत्नसानुः सुरालयः" इत्यमरः, ज्वलति दीप्यमाने सति, समुद्रस्य सुमेरोश्च अभ्यन्तरस्थ-रत्नानां प्रभया दह्यमाने सतीत्यर्थः, सौरे तेजसीति वा भावः, चित्राङ्गी विविध-वर्णरञ्जिता सती, रमयति प्रीतिमुत्पादयति, लोकानामिति शेषः । मन्दाक्रान्ता वृत्तम् ॥ ४९ ॥

तेजोमयमिति ।—तदेव दिक्चक्रं दिङ्मण्डलं, तेजोमयं एकस्यां तेजोबहुलम्, अस्तोन्मुखसूर्यकरसम्पर्कात् पश्चिमतः उज्ज्वलमिति भावः, अन्यतरस्यां प्राच्यादा-विति भावः, तमोमयं तिमिरात्मकम्, अन्धकाराच्छन्नमिति यावत्, अतः धात्रा विधात्रा, भुवनकोषस्य ब्रह्माण्डस्य, इयं परिदृश्यमाना, सृष्टिः रचना, विधातृकर्तृकं निर्माणमित्यर्थः ; "उभयप्राप्तौ कर्मण्येव न कर्तरि" इति नियमात् भुवनकोष-स्येति कर्मणि षष्ठ्यां धात्रेति कर्तरि तृतीया ; किमपि अनिर्वचनीयं यथा तथा, वाग्व्यापारातीता इत्यर्थः, विचित्रा आश्चर्यरूपिणीत्यर्थः । आर्या वृत्तम् ॥ ५० ॥

चूडारत्नैरिति ।—विषधराणां भुजङ्गानां, विवराणि गर्तानि, स्फुरद्भिः दीप्य-मानैः, तिमिरोदयादिति भावः, चूडारत्नैः शिरोमणिभिः, विषधराणामिति भावः, उज्ज्वलानि उज्ज्वलानि, भास्वराणि भास्वराणि, अत्यर्थमालोकयुक्तानीत्यर्थः, प्रेक्ष्यन्ते

विश्वं चाक्षुषमस्तमस्ति हि तमःकैवल्यमौपाधिक-
प्राच्यादिव्यवहारबीजविरहाद्दिङ्मात्रमेव स्थितम्।
गृह्यन्ते भयहेतवः षड्भिरप्यक्षान्तरैर्भाति च
ध्वान्तेनातिघनेन वस्तु वचसा ज्ञातः स्वरेणामुकः ॥ ५२ ॥

दृश्यन्ते, सूर्य्यकान्तात् सूर्य्यकान्ताख्योपलात्, कृशानुः वह्निः, चक्रवाकीणां मनांसि चेतांसि, निर्विशते प्रविशति, सूर्य्यतेजसा सूर्य्यकान्तः स्वाग्निमुद्गिरतीति प्रसिद्धम्, एवञ्च सूर्य्यास्तगमनात् सूर्य्यकान्तस्य निस्तेजस्त्वात् ततस्त्यः वह्निः चक्रवाकीणां चेतांसि प्रविश्य ताः सन्तापयतीति तात्पर्यम्; सूर्य्यविरहसम्पर्कात् प्रभावन्तः सूर्य्यकान्ताः सूर्य्यस्य अस्तगमनात् निस्तेजसः, चक्रवाकीणां मनांसि च निशागमे प्रियविच्छेदात् सन्तप्तानि भवन्तीति निष्कर्षः; किञ्च, अमी प्रज्वलिता इति भावः, दीपाः प्रदीपाः, तिमिरम् अन्धकारं, मथ्नन्तः खण्डयन्तः, उभयतः उभयोः पार्श्वयोः, निर्भरम् अत्यन्तम्, अहस्तमिस्रयोः दिवसान्धकाररजन्योः, "तमिस्रा तामसी रात्रिः" इत्यमरः; यः कद्रुः उन्मेलनं, तेन उत्पिष्टा विमर्दिता, या सन्ध्या तस्याः कणनिकरं बिन्दुसङ्घम्, उत्क्षेपणात् सन्ध्यावयवविच्युतमिति यावत्, सन्ध्यायाः लौहित्यादिति भावः, परिस्फुरन्ते अनुकुर्वन्तीति तथोक्ताः सन्तः, भान्ति राजन्ते। स्रग्धरा वृत्तं—"म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम्" इति तल्लक्षणात् ॥ ५१ ॥

विश्वमिति।—चाक्षुषं चक्षुरिन्द्रियग्राह्यं, विश्वं जगत्, अस्तम् अदर्शनं गतं, तिरोहितमिति यावत्, अन्धकारबाहुल्यात् चक्षुरिन्द्रियेण विश्वं न दृश्यते इति भावः, तमसाम् अन्धकाराणां, कैवल्यं केवलं तम इति यावत्, अस्ति हि वर्त्तते एव, उपाधिविशेषवत् तत्सम्बन्धी औपाधिकः विशेषणसम्बन्ध इत्यर्थः, यः प्राच्यादिव्यवहारः दिक्त्वाभिन्नेऽपि इयं प्राची दिक्, इयं प्रतीचीत्यादिरूप इत्यर्थः, तस्य बीजं हेतुः, सूर्य्य इत्यर्थः, सूर्य्यस्य उदयास्तादिक्रमेणैव दिग्व्यवहारादिति भावः, तस्य विरहात् अभावात्, अस्तमयादिति यावत्, दिङ्मात्रमेव स्थितं केवलं दिगिति प्रतिभासतीति, न तु प्राच्यादिरूपेणेति भावः; षड्भिः समर्थैरपि, वस्तुग्रहणे इति भावः, अक्षान्तरैः अन्यैरिन्द्रियैः, त्वगादिभिरित्यर्थः, भयहेतवः भीतिकारणानि, पदार्था इति शेषः, गृह्यन्ते, अन्धकारे दर्शनाभावात् रज्ज्वां सर्पवदिति भावः; अतिघनेन अतिसान्द्रेण, ध्वान्तेन तमसा, वस्तु घटपटादिकं, वचसा आप्तवाक्येन, अयं घटः अयं पट इत्यादिरूपेणेति भावः, भाति राजते, ज्ञायते इति यावत्, अन्धकारे रूपदर्शनाभावादिति

किञ्च—

घनतरतिमिरक्षुणोत्करजग्धानामिव पतन्ति काष्ठानाम्।
छिद्रैरमीभिरुडुभिः किरणव्याजेन चूर्णानि ॥ ५३ ॥

(नेपथ्ये कलकलः)।

(सर्वे सकौतुकमाकर्णयन्ति)।

(पुनस्तत्रैव)।

निर्मज्जच्चक्षुरन्तर्भ्रमदतिकपिशक्रूरतारा नरास्थि-
ग्रन्थिं दन्तान्तरालग्रथितमविरतं जिह्वया घट्टयन्ती।
ध्वान्तेऽपि व्यात्तवक्त्रज्वलदनलशिखाजर्जरे व्यक्तकर्णा
निर्यान्ती गृध्ररौद्री दिवमुपरि परिक्रीडते ताडकेयम् ॥ ५४ ॥

---

भावः, स्वरेण कण्ठध्वनिना, परिचितेनेति शेषः, अमुकः अयं पुमान्, ज्ञातः विदितः, भवति। अन्धकारवर्णनमिदम्। शार्दूलविक्रीडितं वृत्तम् ॥ ५२ ॥

घनेति।—घनतरं सान्द्रतरं, यत् तिमिरम् अन्धकारः, स एव क्षुणोत्करः काष्ठभक्षककीटसमूहः, तेन जग्धानां भक्षितानां, कृतच्छिद्राणामिति यावत्, काष्ठानां दिशां, दारूणामिति ध्वनिः, "दिशस्तु ककुभः काष्ठाः" इति "काष्ठं दार्विन्धनम्" इति चामरः; चूर्णानि छिद्रैरिव रन्ध्रैरिव, अमीभिः ऊर्ध्वाकाशे परिदृश्यमानैः, उडुभिः नक्षत्रैः, तिमिरक्षुणोत्कीर्णकाष्ठानां नक्षत्ररूपविवरैरिति ध्वनिः, "नक्षत्रमृक्षं भं तारा तारकाऽप्युडु वा स्त्रियाम्" इत्यमरः; किरणव्याजेन मयूखमिषेण, पतन्ति। उत्प्रेक्षाऽलङ्कारः। आर्या वृत्तम् ॥ ५३ ॥

निर्मज्जदिति।—निर्मज्जती निमग्ने भवती, कोटरं प्रविशती इति यावत्, ये चक्षुषी नेत्रे, तयोः अन्तः अभ्यन्तरयोः, भ्रमन्त्यौ घूर्णमाने, अतिकपिशे अत्यन्तपिङ्गले, क्रूरे भीषणे, तारे कनीनिके यस्याः तथोक्ता, "तारकाऽक्ष्णः कनीनिका" इत्यमरः; दन्तानाम् अन्तराले मध्ये, ग्रथितं सुदृढम् आबद्धं, भक्षणार्थमिति शेषः, नरास्थिग्रन्थिं मनुष्यकङ्कालग्रन्थिं, जिह्वया अविरतम् अजस्रं, घट्टयन्ती चालयन्तीत्यर्थः, निष्पादनार्थमिति भावः, व्यात्तं विवृतं, यत् वक्त्रं वदनं, तस्मात् ज्वलतः अनलस्य अग्नेः, शिखया ज्वालया, जर्जरे जर्जरतां गते, विध्वस्ते इति यावत्, ध्वान्ते अन्धकारेऽपि, व्यक्तं प्रकटं, कर्णं छिद्रादिनिष्क्रान्तशिखया यस्यास्तथाविधा, इत्थं ताडका उपरि क्रीडन्ती, दिवम् आकाशं, गृध्ररौद्री गृध्राणां श्मशानचरपक्षिविशेषाणां इवाकारात्,

रामः। (सदृष्टातिरेकम् (ण))। भगवन्! स्त्रियम् (त) इमाम्!!

(पुनर्नेपथ्ये)।

अब्रह्मण्यमब्रह्मण्यम् (थ)। भोस्तात! विश्वामित्र! परिभूयामहे (द), प्रहीयतामधिज्यधन्वा दाशरथिः (ध)।

रामः। (विहस्य नेपथ्याभिमुखीभवनेन)। वालर्षे! शुनःशेप! मुहूर्त्तं धीरो भव—

अलं क्लिशित्वा गुरुमल्पकोऽयं
विधिस्त्वदाशैव गरीयसी नः।
न कौशिकस्य त्वयि धर्मपुत्रे
पुत्रे मधुच्छन्दसि वा विशेषः॥ ५७॥

---

(ण) सदृष्टातिरेकं सानुकम्पातिशयमित्यर्थः, आहेति अध्याहार्य्यक्रियाविशेषणम्।

(त) स्त्रियमिमां, निगृह्णामि!! इति शेषः, स्त्रीवधस्य गर्हितत्वादिति भावः।

(थ) अब्रह्मण्यम् अवध्यम्, अवध्योक्तौ नाट्ये प्रयोज्यमिदम्, "अब्रह्मण्यमवध्योक्तौ" इत्यमरः।

(द) परिभूयामहे निगृह्यामहे, वयमिति शेषः, तत् परित्रायस्वेति भावः।

(ध) प्रहीयतां प्रेष्यताम्। अधिज्यधन्वा ज्यारोपितधनुष्कः, सज्जितधनुष्क इत्यर्थः। दाशरथिः रामः।

अलमिति।—गुरुम् आचार्य्यं, विश्वामित्रमित्यर्थः, क्लिशित्वा खेदयित्वा, क्लिष्टं कृत्वा इत्यर्थः, अलं गुरवे क्लेशो न दातव्य इत्यर्थः, अयं विधिः विधानं, राक्षसाद्रक्षणमित्यर्थः, अल्पकः तुच्छः, अनायाससाध्य इत्यर्थः, तव आशा आदेश एव, नः अस्माकं, गरीयसी अतिमहती, कौशिकस्य विश्वामित्रस्य, धर्मपुत्रे धर्मेण पालिते पुत्रे, त्वयि, वा अथवा, पुत्रे, औरसे इति शेषः, मधुच्छन्दसि विशेषः प्रभेदः, न, अस्तीति शेषः, "गुरुवत् गुरुपुत्रेषु गुरुदारेषु चैव हि" इति मनुवचनेन गुरुपुत्रस्य गुरुवन्माननीयत्वकीर्त्तनात् गुरोश्च धर्म्मपुत्रौरसपुत्रयोर्निर्विशेषत्वात् त्वदाशैव कार्य्यं साधयामीति भावः। उपजातिवृत्तम्॥ ५०॥

विश्वामित्रः । वत्स ! कृतमुत्तरोत्तरेण (न)। नन्वयं नेदीयानाश्रमोपघातः (प)।

जनकः । (अन्यतनिव (फ) स्वगतम्)—

मीमांसते किमार्य्योऽयं कौशिकेऽप्यनुशासति ? ।
वाचमेवामृषीणां हि शास्त्रमेवानुवर्त्तते ॥ ५८ ॥

रामः । (स्वगतम्)—

गुर्व्वादेशादेव निर्मीयमाणो
नाधर्माय स्त्रीवधोऽपि स्थितोऽयम् ।
अद्य स्थित्वा श्वो गमिष्यद्भिरल्पै-
र्लज्जाऽस्माभिर्मीलिताक्षैर्जितेव ॥ ५९ ॥

(न) कृतमुत्तरोत्तरेण पुनः पुनः प्रतिवचसा, कृतम् अलम्, उत्तरोत्तरं विफल-मिति तत्प्रयोजनं नास्तीति भावः ।

(प) ननु भोः । नेदीयान् सन्निहितः, उपस्थित इत्यर्थः । आश्रमोपघातः आश्रमपीडा ।

(फ) अन्यतनिव सद्दुःखमिव, आश्रमोपघातश्रवणेनेति भावः ।

मीमांसते इति ।—कौशिके विश्वामित्रे, अनुशासति आदिशति अपि, अयम् आर्य्यः रामः, किं वा विषयं, मीमांसते ? विचारयति ? अत्र किमपि विचार्य्यं नास्तीति भावः, हि यतः, शास्त्रमेव एषाम् ऋषीणां वाचम् अनुवर्त्तते अनुसरति, एषां वागेव शास्त्ररूपेण वर्त्तते, तत् कथं अवध्याः स्त्रियः इति शास्त्रानुसरणे आर्य्यस्य विचारः ? इति भावः । अनुष्टुप् वृत्तम् ॥ ५८ ॥

गुर्व्विति ।—गुरोः विश्वामित्रस्य, आदेशादेव आज्ञयैव, निर्मीयमाणः क्रियमाणः, अयम् एषः, स्त्रीवधोऽपि नारीहत्याऽपि, अधर्माय न स्थितः न प्रभवतीति भावः, अद्य अस्मिन् दिने, स्थित्वा, अत्रेति शेषः, श्वः परदिने, गमिष्यद्भिः अल्पैः बालकैः, अस्माभिः मीलिताक्षैरेव निमीलितनयनैरेव सद्भिः, लज्जा जिता, भविष्यतीति शेषः, दुष्कार्य्यकारिणां जनसन्दर्शने एव लज्जा, तत्र नयनोन्मीलनसाध्यं, तदकृत्वा निमीलितनयनेनाऽऽदकार्य्यसाधनात् सत्वरप्रस्थाने केनापि दृष्टत्वाभावात् न लज्जाप्रसर इति भावः । यद्वा—मीलिताक्षैः उन्मीलितनयनैः, बालानामस्माकं गुर्व्वादेश एव बलवान्, तदाज्ञयैव तथा अकार्य्यम् इदं कृतमपि नास्माकं लज्जाऽपि

किन्तु—

दीर्घं प्रजाभिरतिकौतुकिनीभिराभि-
रस्मिन्नकीर्त्तिपटहे मम ताड्यमाने।
ज्योतिर्मयेन वपुषा जगदन्तसाक्षी
लज्जिष्यते कुलगुरुर्भगवान् वसिष्ठः ॥ ६० ॥

(नेपथ्ये)।

अलमिष्ट्वा मखान् मूर्खाः! खड्गधारेयमस्ति नः।
अदवीयानयं पन्थाः स्वर्लोकमुपतिष्ठते ॥ ६१ ॥

रामः। (श्रुत्वा सरोषं ससम्भ्रमं कौशिकाय सविनयमञ्जलिं बद्ध्वा)।

भगवन्! जगत्त्रयगुरो! गाधिनन्दन!—

---

लज्जा, अतः श्वो गमनकाले उन्मीलितनयनैरेवास्माभिर्गन्तव्यमिति भावः। शालिनी वृत्तं—"मात्तौ गौ चेच्छालिनी वेदलोकैः" इति तल्लक्षणात् ॥ ५९ ॥

दीर्घमिति।—अतिकौतुकिनीभिः बहुमेतत् आश्चर्यं कृतं रघुवंश्येन रामेणेति कौतूहलवतीभिः, आभिः प्रजाभिः जनैः, अस्मिन् मम अकीर्त्तिपटहे लोकघोषेणेव कृत इति अयशःख्यापकवादित्रभेदे, ताड्यमाने आहन्यमाने सति, ज्योतिर्मयेन तेजोमयेन, वपुषा शरीरेणेत्यर्थः, ज्योतिर्मयेन वपुषा उपलक्षित इति वा, जगदन्तसाक्षी जगताम् अन्तस्य प्रलयस्यापि, साक्षी साक्षात् द्रष्टा, तस्मात्क्वापि न किमपि गोपायितुं शक्यते केनापीति भावः, कुलगुरुः वंशक्रमागतः आचार्यः, भगवान् सर्वज्ञानवान्, वसिष्ठः दीर्घम् अत्यन्तं, लज्जिष्यते, ममैतेन कर्मणेति भावः। वसन्ततिलकं वृत्तम् ॥ ६० ॥

अलमिति।—हे मूर्खाः! याज्ञिका इति शेषः, मखान् यज्ञान्, इष्ट्वा अर्चयित्वा, कृत्वेत्यर्थः, यज्ञैर्देवान् अभ्यर्च्येति यावत्, अलं कृतं, यज्ञार्थोऽयमायासो वः निरर्थक एव इति भावः, नः अस्माकम्, इयं खड्गधारा अस्ति वर्त्तते, यया युष्मान् नाशयाम इति भावः, अयम् अदवीयान् अदूरवर्त्ती, सरल इति यावत्, शीघ्रगमनाय इति भावः, पन्थाः मार्गः, उपाय इति भावः, स्वर्लोकं स्वर्गम्, उपतिष्ठते उपस्थितो भवति, शीघ्रं स्वर्गं प्रापयतीति भावः; बहुभिरायासैः खलु यागः क्रियते, तेनापूर्वं पुण्यं जन्यते, ततश्च स्वर्गलाभ इति स्वर्गगमने युष्माकं कुटिलः पन्थाः, अस्माकन्तु खड्गा-घातेन शीघ्रं स्वर्गं प्राप्यते इति कृत्वा वक्रपथाः, तत् युष्मान् निहत्य स्वर्गं प्रेषयाम इति भावः। अनुष्टुप् वृत्तम् ॥ ६१ ॥

दशरथगृहे सम्भूतं मामवाप्य धनुर्धरं
दिनकरकुलस्कन्धः कोऽयं कलङ्कनवाङ्कुरः ! ! !
इति न वनितामेतां हन्तुं मनो विचिकित्सते
यदधिकरणं धर्मस्थीयं तदेव वचांसि नः ॥ ६२ ॥

(प्रविश्य नेपथ्याभिमुखम्)। भोस्तपोधनाः ! मा भैष्ट (क)—

रजनिचरचमूरमूरपास्य-
न्नयमहमागत एव रामचन्द्रः ।
कुशिकसुतकृशाश्वतीर्थविन्दो-
रिदमनुकल्पमवेत कार्मुकं मे ॥ ६३ ॥

(इति धनुरारोपयन् (ख) निष्क्रान्तः)।

---

दशरथेति।—दशरथस्य गृहे सदने, वंश्यां वा, "न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते" इति शास्त्रात्, सम्भूतं समुत्पन्नं, धनुर्धरम् अवाप्तधनुर्वेदं, माम् अवाप्य प्राप्य, दिनकरस्य सूर्यस्य, कुलस्कन्धः वंशावलम्बनकरः इत्यर्थः, कलङ्कस्य लोपातस्य इति अपकीर्तेः, नवः अङ्कुरः प्ररोहः, दिनकरकुले एवंविधकलङ्कस्य मयैव प्रथममुत्पादितमिति भावः, कथं कः? समुत्पन्न इति शेषः, इति—जना एवं वदिष्यन्ति इति विचिन्त्य इत्यर्थः, मनः एतां वनितां ताडकां, हन्तुं न विचिकित्सते न संशेते, एतस्या हनने जनाः मां सूर्यवंशकलङ्कं कथयिष्यन्ति इति यः संशयः प्रागासीत्, स इदानीं त्वदाज्ञया अपगत इति भावः, "विचिकित्सा तु संशयः" इत्यमरः; यत् यतः, तदेव वचांसि धर्मशास्त्रवाक्यानीत्यर्थः, नः अस्माकं, धर्मस्थीयं धर्मस्थितिमूलं, धर्मप्रवर्तकमिति यावत्, अधिकरणम् अवलम्बनं, तव वच एव धर्म इति ज्ञात्वा एनां हन्मीत्याशयः। हरिणी वृत्तं—"न-स-म-र-स-ला गः षड्वेदैर्हयैर्हरिणी मता" इति तल्लक्षणात् ॥ ६२ ॥

(क) मा भैष्ट भीतिं न कुरुध्वम्।

रजनीति।—अयमहं रामचन्द्रः अमूः उपरि दृश्यमाना इति भावः, रजनिचर-चमूः राक्षससेनाः, अपास्यन् दूरीकुर्वन्, आगत एव उपस्थित एव, मे मम, इदं हस्तस्थितमिति भावः, कार्मुकं धनुः, कुशिकसुतस्य विश्वामित्रस्य, कृशाश्वे यत् तीर्थं जलं, रक्षोघ्नमन्त्रपूतमिति भावः, तस्य बिन्दोः कणस्य, अनुकल्पम् प्रथमकल्पं, तीर्थविधानमित्यर्थः, प्रतिनिधिस्वरूपमिति भावः, अवेत जानीत, राक्षसनिधने गुरोः मन्त्रपूतकृशाश्वतीर्थमेव मुख्यः कल्पः, धनुस्त्विदम् तस्य तस्य प्रतिनिधिस्वरूपं, अतः तेनैव

यानुत्प्रेक्ष्य विशोषयन्मदमयं मैरेयमैरावणो
भूषास्रग्भिरभूदमात्यमधुपश्रेणीषु साधारणः ॥ ५९ ॥

तेषु च सत्सु—

वृथा सज्जनसम्बन्ध-सत्कारेणासि वञ्चितः।
पौलस्त्यहस्तवर्त्तिन्या सीतया तु भविष्यते ॥ ६० ॥

( साक्षेपं (२) च नेपथ्याभिमुखमवलोक्य )।

समन्तादुत्तालैः सुरसहचरीचामरमरु-
त्तरङ्गैरुन्मीलद्भुजपरिघसौरभ्यशुचिना।
स्वयं पौलस्त्येन त्रिभुवनभुजा चेतसि कृता-
मरे राम! त्वं मा जनकपतिपुत्रीमुपयथाः ॥ ६१ ॥

---

प्रसिद्धाः, वीरस्य शूरस्य, राक्षसपतेः रावणस्य, दोःस्तम्भस्तोमाः स्तम्भसदृशदृढबाहु-समूहाः, जयन्ति सर्वोत्कर्षेण वर्त्तन्ते, ऐरावणः इन्द्रहस्ती ऐरावतः, यान् दोःस्तम्भस्तोमान्, उत्प्रेक्ष्य दृष्ट्वा, मदमयं गर्वमयं, मैरेयं मद्यवारि, विशोषयन् भूषास्रग्भिः अलङ्कारभूतपुष्पमालाभिः, अमात्यमधुपश्रेणीषु सहचरभ्रमरसमूहेषु साधारणः सामान्यः, मदशोषणात् अपगतमदस्तम्भ इति यावत्, अभूत्, तस्मादपि सीतां रावणो बाहुबलेन हरिष्यतीति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ ५९ ॥

वृथेति।—वृथा निरर्थकेनेति यावत्, सज्जनैः साधुजनैः, सम्बन्धः संयोगः, तेन सत्कारः पूजा, जनकः सत्यप्रतिज्ञ इत्येवंरूपा प्रशंसा इति भावः तेन, यद्वा—सज्जनेन भुवनविश्रुतकीर्त्तिना रावणेन, यः सम्बन्धः सम्पर्कः, तेन यः सत्कारः समादरः, त्रिभुवनैकवीररावणश्वशुरो जनक इति सम्मानना इति भावः तेन, वृथा वञ्चितः प्रतारितः, असि, तु किन्तु, सीतया, अन्यस्मै दत्तयाऽपीति भावः, पौलस्त्यस्य रावणस्य, हस्तवर्त्तिन्या हस्तगतया, भविष्यते, रावण एनां हरिष्यत्येवेति भावः। अनुष्टुप् वृत्तम् ॥ ६० ॥

(२) साक्षेपं सतिरस्कारम्।

समन्तादिति।—अरे राम! उत्तालैः महद्भिः, अतिप्रवृद्धैरित्यर्थः, सुरसहचरीणां देवाङ्गनानां, रावणहृतानामिति भावः, चामरमरुतां वालव्यजनपवनानां, तरङ्गैः प्रवाहैरिति यावत्, समन्तात् चतुर्दिक्षु, उन्मीलत् प्रसरत्, यत् भुजपरिघाणां बाहुरूपार्गलानां, सौरभ्यं सौगन्ध्यं, तेन शुचिः सौरभयाभिरूपैः तेन, त्रिभुवनभुजा

(सविस्मयमात्मगतम्)। अहो! गम्भीरम् (ख) इदमुपस्थितं वस्तु; तदचिरं माल्यवन्तमेव पुरस्कृत्य लङ्केश्वरस्य निवेदयामि।

(इति निष्क्रान्ताः सर्वे)।

इति विवाहमङ्गलो नाम तृतीयोऽङ्कः।

---

# चतुर्थोऽङ्कः।

---

(ततः प्रविशति माल्यवान्)।

माल्यवान्। (आकाशमवलोक्य परिक्रम्य)। अये! विभातेव विभावरी। तथा हि—

स्तोकोन्निद्रनिदाघदीधितिमहस्तन्द्रालुचन्द्रातपा-
स्तायन्ते ककुभो रथाङ्गगृहिणीगार्हस्थ्यगर्हाभिदः।
अद्यापि स्वकुलायशाखिशिरसि स्थित्वा रुवन्तो मुहु-
स्तूष्णीं प्रत्यभिजानते बलिभुजो भीताः स्वयूथ्यस्वरान्॥ १॥

---

त्रिलोकीमपि च, पौलस्त्येन रावणेन, स्वयम् आत्मना, चेतसि मनसि, कृतां भार्य्यात्वेन सङ्कल्पितामित्यर्थः, जनकपतिपुत्रीं मैथिलीं, त्वं मा उपयच्छाः न परिणय, तथा कृते तव विपत्तिरनिवार्य्येति भावः। "उपयमो विवाहे" इत्यात्मनेपदम्। शिखरिणी वृत्तम्॥ ६१॥

(ख) गम्भीरम् अतिमहदित्यर्थः।

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण कृता
अनर्घराघवतृतीयाङ्कव्याख्या समाप्ता॥ ३॥

---

स्तोकेति।—स्तोकेन अल्पम्, उन्निद्रं प्रबुद्धं, प्रकटमित्यर्थः, यत् निदाघदीधिति-महः निदाघदीधितेः उष्णकिरणस्य, सूर्य्यस्येत्यर्थः, महः तेजः, तेन तन्द्रालवः निष्प्रभाः, निष्प्रभा इति यावत्, चन्द्रातपाश्चन्द्ररश्मयः यासु तथोक्ताः, "आतपो रश्मिमात्रे च सूर्यरश्मौ च दृश्यते" इति वररुचिः; रथाङ्गगृहिणीनां चक्रवाकीनां, गार्हस्थ्ये संसारे, या गर्हा निन्दा, रात्रिविरहजनितेति भावः, तस्या भिदः अप-

अपि च—

> प्राचीं वासकसज्जिकामुपगते भानौ दिशां वल्लभे
> पश्यैता रुचयः पतङ्गदृषदामाग्नेयनाडिन्धमाः।
> लोकस्य क्षणदानिरङ्कुशरसौ सम्भोग-निद्रागमौ
> कोकस्तोम-कुमुद्वतीविपिनयोर्निक्षेपमातन्वते ॥ २ ॥

( सर्वतो निरूप्य )। हन्त ! समन्तादामोदमानपौरसम्भोगमयी (क) खल्वियं दशग्रीवभुजार्गलापरिपालिता ( ख ) राजधानी—

---

मोदिताः, सूर्योदये पुनः सङ्कमादिति भावः, ककुभः दिशः, "दिशस्तु ककुभः काष्ठाः" इत्यमरः; तायन्ते विस्तृता भवन्ति, क्रमशः प्रकाशन्ते इति यावत्; अद्यापि इदानीमपि, बलिभुजः काकाः, "काके तु करटारिष्ट···। बलिभुग्वायसा अपि" इत्यमरः; स्वकुलायः निजनीडम्, आत्मनो वासस्थानमित्यर्थः, "कुलायो नीडमस्त्रियाम्" इत्यमरः; यः शाखी वृक्षः, तस्य शिरसि अग्रशाखायां, स्थित्वा मुहुः पुनः पुनः, रुवन्तः शब्दं कुर्वन्तः, पुनश्च भीताः सन्तः तूष्णीं मौनं, स्थित्वेति शेषः, मूकीभूयेत्यर्थः, स्वकुल्यस्वरान् स्ववर्गीयरवान्, प्रत्यभिजानते पूर्वानुभूतान् स्मरन्ति, श्रोतुं सावहिताः भवन्तीति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ १ ॥

प्राचीमिति।—दिशां वल्लभे प्रिये, भर्त्तरि इति यावत्, भानौ सूर्ये, वासकसज्जिकां "कुरुते मण्डनं यस्याः सज्जिते वासवेश्मनि। सा तु वासकसज्जा स्यात् विदितप्रियसङ्गमा॥" इत्युक्तलक्षणां, प्राचीं पूर्वां दिशम्, उपगते प्राप्ते सति, "वासकसज्जिकाम्" इत्यत्र "वासवदीक्षिताम्" इति पाठे—वासवेन इन्द्रेण, दीक्षितां स्वीकृतां, पालितामिति यावत्, "दीक्षा स्वीकार आदेशे" इति विश्वः; पतङ्गदृषदां सूर्यकान्तोपलानाम्, आग्नेयनाडीन्धमाः आग्नेयनाडीं सूर्यातपप्रतिफलनोपायभूतमार्गविशेषमित्यर्थः, धमन्ति अग्निसंयुक्तां कुर्वन्तीति तथोक्ताः, एताः निःसरन्त्यः, रुचयः मयूखाः, लोकस्य जगतः, जगद्वासिनो जनस्य इत्यर्थः, क्षणदायां रजन्यां, निरङ्कुशः निरर्गलः, रसः स्वादः ययोः तथाभूतौ, सम्भोग-निद्रागमौ रमण-स्वापौ, कोकानां चक्रवाकानां, स्तोमः समूहः, कुमुद्वतीविपिनं कैरववनं तयोः, निक्षेपं न्यासं, कोकस्तोमे सम्भोगं निधनभावं, कुमुद्वतीविपिने निद्रागमं सङ्कोचमिति यावत्, आतन्वते विस्तारयन्ति, पद्य वाक्यार्थः क्रमेण बोध्यम्। शार्दूलविक्रीडितं वृत्तम् ॥ २ ॥

(क) आमोदेति।—आमोदमानानां हृष्यतामित्यर्थः, पौराणां पुरवासिनां, सम्भोगमयी सुखभोगात्मिका।

इतः पौरस्त्यायां ककुभि विवृणोति क्रमदल-
त्तमिस्रामर्माणं किरणकलिकामम्बरमणिः ।
इतो निष्क्रामन्ती नवरतिगुरोः प्रोञ्छति वधूः
स्तनस्तूरीपत्राङ्कुरमकरिकामुद्रितमुरः ॥ ३ ॥

अपि च—

अयं मृदुमृणालिनीवनविलासवैहासिक-
स्त्विषां वितपते पतिः सपदि दृश्यमाना निशाः ।
स्तनौ पुलकयन्ति चोत्पलदृशां प्रियोरःस्थले
विपर्ययितवृत्तयो घुसृणपङ्कपत्राङ्कुराः ॥ ४ ॥

---

(ख) दशग्रीवेति।—दशग्रीवस्य रावणस्य, भुजा एव अर्गलाः परिघाः, ताभिः परिपालिता सुरक्षिता ।

इत इति।—इतः अस्यां, पौरस्त्यायां प्राच्यां, ककुभि दिशि, अम्बरमणिः सूर्यः, क्रमेण शनैः शनैरित्यर्थः, दलत् विदीर्यमाणं, तमिस्रायास्तामस्या रजन्याः, "तमिस्रा तामसी रात्रिः" इत्यमरः; मर्म जीवस्थानम्, अतिसङ्कटस्थानमिति भावः यथा तथाभूतां, किरणकलिकां मयूखाङ्कुरम्, अभिनवान्निःसृतकिरणमित्यर्थः, विवृणोति प्रकटयति; इतः अस्मिन् प्रदेशे, अस्मात् प्रदेशात् वा, निष्क्रामन्ती निर्गच्छन्ती, अवसन्नगृहादिति भावः, वधूः नवोढा भार्य्या, नवरतिगुरोः नवस्य नवीनस्य, रतिगुरोः सुरताचार्य्यस्य, भर्त्तुरित्यर्थः, स्तनकस्तूरीपत्राङ्कुरमकरिकया निजस्तनमदरचितपत्राङ्कुररूप-मकराकृत्या, स्तनदेशे विरचितमकराकृतितिलकविशेषेण इत्यर्थः, मुद्रितं चिह्नितम्, अङ्कितमिति यावत्, उरः वक्षःस्थलं, प्रोञ्छति मार्जयति, तच्चिह्नरहितं करोतीत्यर्थः, तस्य गुर्वादिसमीपे सम्भोगचिह्नप्रकाशेन लज्जा मा भूदिति हेतोरिति भावः; यद्वा—नवरतिगुरोरिति पञ्चम्यन्तं पदं, ततश्च नवरतिगुरोः जारात्, तत्सकाशादिति यावत्, निष्क्रामन्ती तादृशम् उरः, स्वकीयमिति शेषः, प्रोञ्छति, अपरैः तच्चिह्नस्य जारकृत-त्वेन स्वनायकादीनां तज्ज्ञानं मा भूदित्यभिप्रायेणेति भावः। शिखरिणी वृत्तम् ॥ ३ ॥

अयमिति।—मृदु कोमलं, यत् मृणालिनीवनं पद्मिनीवनं, तत्र विलासः विहारः, तत्र वैहासिकः कौतुककरः, विदूषक इति यावत्, "वैहासिकः कौतुककरः प्रहासी च विदूषकः" इति भरतः; अयं त्विषां पतिः सूर्यः, वितपते प्रकाशमानोऽस्तीति यावत्, सपदि सम्प्रतीति यावत्, उत्पलदृशां कमललोचनानां, प्रियोरःस्थले प्रियवक्षसि, दृश्यमानाः

इतश्च—

प्रियवसतेरपयान्त्यो मिथः करम्बितकराम्बुजन्मानः ।
करजव्रणविरलस्तनपुलकममूः किमपि विवदन्ते ॥ ५ ॥

(परिक्रम्य दृष्ट्वा)। इतो रम्यतरं वर्त्तते—

प्रभाते पृच्छन्तीरनुरहसवृत्तं सहचरी-
र्नवोढा न व्रीडामुकुलितमुखीयं सुखयति ।
लिखन्तीनां पत्राङ्कुरमनिशमस्यास्तु कुचयो-
श्चमत्कारो गूढं करजपदमासां कथयति ॥ ६ ॥

---

विपर्य्ययिता विपर्य्ययं प्राप्ता, स्थितिः स्थितिर्येषां तादृशाः, पुरुषायिते हि स्त्रीणामधोमुखतया प्रियतमवक्षसि वाम-दक्षिणस्तनयोर्वैपरीत्येन पत्रावलीनां सङ्क्रमणादिति, नायिकावक्षोदेशात् नायकवक्षसि मुद्रावरवत् (मोहर) प्रतिलोमभावेन सङ्क्रमिता इति वा भावः, निजाः स्वकीयाः, पुलकपङ्कपत्राङ्कुराः मृगमदकुङ्कुमविरचितपत्रावल्यः, स्तनौ पुलकयन्ति रोमाञ्चितौ कुर्वन्ति, सम्भोगस्मरणादिति भावः। पृथ्वीवृत्तं—"ज-सौ ज-स-य-ला वसुग्रहयतिश्च पृथ्वी गुरुः" इति तल्लक्षणात् ॥ ४ ॥

प्रियवसतेरिति।—प्रियवसतेः कान्तवेश्मनः, भर्त्तुः जारस्य वा गृहादित्यर्थः, "वसती रात्रिवेश्मनोः" इत्यमरः ; अपयान्त्यः निर्गच्छन्त्यः, अमूः नार्य्यः, करम्बितानि मिलितानि, करा हस्ता एव, अम्बुजन्मानि पद्मानि यासां तथाभूताः, परस्परं गृहीतपाणिकमलाः सत्यः इत्यर्थः, करजव्रणेन नखक्षतेन हेतुना, "करजं स्यात् व्याघ्रनखे करज्ञ नखयोः पुमान्" इति मेदिनी ; विरलम् अल्पाल्पम्, अल्पतया दृश्यमानमित्यर्थः, स्तनयोः पुलकं रोमाञ्चः यत्र तत् यथा तथा, मिथः परस्परं, विवदन्ते कलहायन्ते, काचित् वदति तव स्तनयोरेतावत् नखक्षतं यत् सम्भोगस्मरणजं पुलकमपि अल्पं दृश्यते, अन्या वदति नैवं मम, तवैवैतादृक् दृश्यते इत्येवं कलहं कुर्वन्तीत्यर्थः। सामान्यनायिकावर्णनमिदम्। आर्य्या वृत्तं—"यस्याः प्रथमे पादे द्वादश मात्रास्तथा तृतीयेऽपि। अष्टादश द्वितीये चतुर्थके पञ्चदश साऽऽर्य्या॥" इति तल्लक्षणात् ॥ ५ ॥

प्रभाते इति।—व्रीडया लज्जया, मुकुलितं मुद्रितम्, अविकसितमित्यर्थः, नतमिति यावत्, मुखं यस्याः तादृशी, इयं नवोढा नवपरिणीता, वधूरिति शेषः, प्रभाते प्रातःकाले, अनुरहसवृत्तं रहोवृत्त रात्रिकालीननीपनीविविषयम्, अनु-पश्चात्तीतमित्यर्थः,

(पुस्तकमनुध्याय)। अहो! यतः प्रभृति वैदेहीवरणाय प्रहितेन पुरोधसा कथ्यमानं काकुत्स्थकुलकुमारस्य मानुष्यकातिशयम् (ग) अशृणवं, ततः प्रभृति कष्टां दशामनुभवामि। तथा हि—

तत्तादृशं कथमुदेति मनुष्यलोके
तेजोऽद्भुतम्? निरभिसन्धि न तावदेतत्।
तान्येव चास्य चरितानि दशाननस्य
धिक्! चिन्तया रजनिरक्षिषु नः प्रभाति ॥ ७ ॥

अपि च—

श्रुत्वा दुःश्रवमद्भुतस्य मिथिलावृत्तान्तमन्तःपत-
च्चिन्ताऽपक्ववसार्द्रहृद्यवदनत्वग्विप्रकीर्णाञ्चितः।

---

सुरतादिव्यापारं विषयीकुर्वन्तीति यावत्, पृच्छन्तौ जिज्ञासमानाः, सहचरीः वधकाः, न सुखयति न तोषयति, रहस्याख्यानविरहेणेति भावः, तु किन्तु, अन्याः वध्वाः, कुचयोः स्तनयोः, अमन्दाः वैचित्र्यम्, अनिशं सततं, पुनः पुनरिति यावत्, पत्राङ्कुरं मुद्रपत्रलेखां, लिखन्तीनां रचयन्तीनां, कुर्वतीनामित्यर्थः, आसां सहचरीणां, गूढ़ं अप्रकटमित्यर्थः, आरणपदं नखचिह्नं, नखक्षतमित्यर्थः, कथयति ज्ञापयतीत्यर्थः, रहोवृत्तमिति शेषः, तज्ज्ञापनात् अकथितेऽपि रहोवृत्ते स्तनयोः पत्रावलीरचनसमये तासां गूढ़नखक्षतदर्शनात् तज्ज्ञानमभूदिति भावः। शिखरिणी वृत्तम् ॥ ६ ॥

(ग) मानुष्यकातिशयम् अमानुषचरितप्रकर्षमिति यावत्।

तदिति।—मनुष्यलोके नरलोके, तत् सर्वत्र विश्रुतं, तादृशं ताड़कावधादिरूपम्, अद्भुतम् आश्चर्यं, तेजः ज्योतिः, ज्योतिर्मयं रामरूपं वस्तु इति भावः, कथम् उदेति? उद्भवं प्राप्नोति? एतत् तावत् न निरभिसन्धि न निरभिप्रायम्, अत्र कोऽपि अभिसन्धिरस्तीति भावः, अस्य दशाननस्य तानि लोकविख्यातानि, चरितानि वृत्तानि, त्रिभुवनपीडनादीनि इति भावः, धिक् एव निन्दास्पदमेव, "धिङ् निर्भर्त्सननिन्दयोः" इत्यमरः; वैदेह्या रूपान्तरजनितावमाननादिरूपादिति भावः; चिन्तया एतद्विषयकभावनेन, नः अस्माकम्, अक्षिषु नेत्रेषु, रजनिः रात्रिः, प्रभाति प्रकाशेन दीप्यते, सततमस्वापं प्राप्नोमीति भावः। वसन्ततिलकं वृत्तम् ॥ ७ ॥

(सविमर्षम् (ङ))। अहो ! मैथिलनृपतेरकार्य्यज्ञता (च)—

विश्वामित्रवशीकृते हृदि वयं मा भूम सम्बन्धिन-
स्ते दृष्टा न कथं पुराणमुनयो मान्याः पुलस्त्यादयः ? ।
जामाताऽपि महेन्द्रमौलिवलभीपर्य्यङ्करत्नाङ्कुर-
ज्योत्स्नापुष्टनखेन्दुदीधितिरयं नापेक्षितो रावणः !! ॥१०॥

(पुरोऽवलोक्य)। कथं मिथिलाचरितानि चरितुम् (छ) अनुप्रहिता चिरयति वत्सा शूर्पणखा ?

(प्रविश्य शूर्पणखा)।

शूर्पणखा। (सहर्षम्)। अम्महे ! सोम्महुंदरविग्गहरूवेणच्छ-

---

(ङ) सविमर्षं सवितर्कम् ।

(च) अकार्य्यज्ञता कार्य्यानभिज्ञता, अविवेकिता इत्यर्थः ।

विश्वामित्रेति ।—विश्वामित्रेण वशीकृते आयत्तीकृते, हृदि चित्ते, तवेति शेषः, वयं सम्बन्धिनः सम्पर्कार्हाः, यौनसम्बन्धयोग्याः इत्यर्थः, मा भूम न भवामः, किन्तु ते प्रसिद्धाः, मान्याः पूजार्हाः, पुराणमुनयः प्राचीन-ऋषयः, ब्रह्मणो मनसः प्राक् उत्पन्नत्वादिति भावः, पुलस्त्यादयः पुलस्त्यप्रभृतयः, रावणपूर्वपुरुषा इति भावः, कथं न दृष्टाः ? न लक्षिताः ? विश्वामित्रादपि श्रेष्ठानां पुलस्त्यादीनां कुलजो रावणस्तस्या अवश्यमेव वरणीय इति भावः ; अयं रावणः महेन्द्रस्य देवराजस्य, मौलिरेव शिर एव, किरीटमेव वा, "चूडा किरीटं केशाश्च संयता मौलयस्त्रयः" इत्यमरः ; वलभी प्रासादोपरिगृहं, "गृहान्ते वलभी चन्द्र-शाले वीथीङ्कवेश्मनि" इति रभसः ; तदेव पर्य्यङ्कः खट्वा, यद्वा—मौलिरेव वलभीपर्य्यङ्कः वलभीस्थखट्वा इत्यर्थः, तत्र ये रत्नाङ्कुराः मणिप्ररोहाः, चूडाङ्कितमणिसमूहा इत्यर्थः, तेषां ज्योत्स्नाभिः किरणैरित्यर्थः, पुष्टाः वृद्धिं नीताः, नखेन्दूनां नखचन्द्राणां, दीधितयः किरणाः यस्य तादृशः, देवेन्द्रमस्तकचर्च्चितचरण इति यावत्, जामाता अपि न अपेक्षितः ? न प्रतीक्षितः ? स्वकीयजामातृत्वेन न लक्षितः ? इति यावत् । शार्दूलविक्रीडितं वृत्तम् ॥ १० ॥

(छ) चरितुं पर्य्यवेक्षितुमिति यावत् ।

च्छच्छोविच्छुरिदकांतिपब्भाराइं (ज) रहुउलकुमाराणं, मुहपुंडरीआइं पेक्खंती जुउच्छिदेणावि माआमाणुसी-भावेण (झ) किदत्थीकिदम्हि। अम्मो! सा तादिसी गुणाणं पकिदी, (ञ) जा विपक्खहत्थपडिदावि (ट) सुहावेदि। *

माल्यवान्। (दृष्ट्वा सखेदम्)। कथं वत्सा शूर्पणखा? वत्से! अयमहम्। इत इतो भवती।

शूर्पणखा। कधं इह ज्जेव्व अट्टालअसिहरपग्गीवे (ठ) मादामहो। अम्मो! दुस्सिलिट्ठता (ड) दहकण्णाणं, जं दाणिं पजागरकिलिम्मंतलोअणो पडिक्खणजिंभिआपसारिद-मुहकुहरदिट्ठहिअअट्ठिदकाठिणकज्जभारो (ढ) अओ विअ

* अम्महे! सौम्यसुन्दरविवाहनेपथ्यच्छविच्छुरितकान्तिप्राग्भाराणि रघुकुल-कुमाराणां मुखपुण्डरीकाणि प्रेक्षमाणा जुगुप्सितेनापि मायामानुषीभावेन कृतार्थी-कृताऽस्मि। अम्मो! सा तादृशी गुणानां प्रकृतिः, या विपक्षहस्तपतिताऽपि सुखयति।

(ज) अम्महे! आश्चर्य्ये, "अम्मो अम्महे इति पदं कुर्य्यात् स्त्रीणान्तु विस्मये" इति भरतः। सौम्येति।—सौम्या प्रियदर्शना, सुन्दरी शोभना च, या विवाहनेपथ्यच्छविः वैवाहिकपरिच्छदशोभा, तया विच्छुरितः विस्फुरितः, कान्तिप्राग्भारः कान्त्यतिशयः येषां तथाभूतानि।

(झ) जुगुप्सितेनापि निन्दितेनापि, क्षुद्रजीवमानुषरूपधारणात् दूषितेनापि इति यावत्; मायामानुषीभावेन मायया कपटेन गृहीत इत्यर्थः, मानुषीभावः मानुषदेहः तेन।

(ञ) प्रकृतिः स्वभावः।

(ट) विपक्षेति।—विपक्षस्य शत्रोः, हस्ते पतिताऽपि विपक्षगामिनी अपीत्यर्थः, अस्माकं शत्रोः सम्बन्धिनी अपीति भावः।

(ठ) अट्टालकशिखरप्रग्रीवे अट्टालकस्य प्रासादस्य, शिखरम् उपरिभागः, तस्य प्रग्रीवे प्रान्तभागे इति यावत्।

(ड) दुःश्लिष्टता दुःखसंयोजिता, दुःखदायकता इत्यर्थः, दुरवगाहता इत्यर्थो वा।

(ढ) प्रजागरेति।—प्रजागरेण प्रकृष्टेन जागरणेन, दुश्चिन्ताजनितया अनिद्रयेति यावत्, क्लान्ते म्लाने, कातरे इत्यर्थः, कलुषिते इत्यर्थो वा, लोचने यस्य सः।

को वि दीसदि । अहवा सामण्णो वि गुरुओ (च) मंतिभावो, विसेसेण साहसेक्करसव्ववसायस्स चंडचरिदस्स (त) अत्तसालिणो रावणस्स । जाणामि, (थ) मं ज्जेव पडिपालअंतो (द) चिट्ठदि । जाव णं उवसप्पामि । (उपसृत्य) । अज्ज ! वंदे । *

माल्यवान् । वत्से ! वत्साभिनी भूयाः । इहास्यताम् । अपि भरत-शत्रुघ्नाभ्यां मिथिलामुपस्थितो दशरथः ?

शूर्पणखा । (उपविश्य) । अज्ज ! दसरहे आअदे कुमाराणं गोदाणमंगले (ध) अ संवुत्ते दाव मए पत्तं मिहिला-णअरं । †

---

* कथमिहैवाद्भुतकठिनकरणीव मातामहः । अहो ! दुःस्थिता दग्धकार्य्याणां, अहिदानीं प्रज्ञानरक्ताञ्चलोचनः प्रतिक्षणजृम्भाप्रसारितमुखकुहरदृष्टहृदयस्थितकठिन-कार्य्यभारोऽन्य इव कोऽपि दृश्यते । अथवा सामान्योऽपि गुरुको मन्त्रभावः, विशेषेण साहसैकरसव्यवसायस्य चण्डचरितस्याऽऽत्मश्लाघिनो रावणस्य । जानामि, मामेव प्रतिपालयंस्तिष्ठति । यावदेनमुपसर्पामि । आर्य्य ! वन्दे ।

† आर्य्य ! दशरथे आगते कुमाराणां गोदानमङ्गले च संवृत्ते तावन्मया प्राप्तं मिथिलानगरम् ।

---

प्रतिक्षणेति ।—प्रतिक्षणं क्षणे क्षणे, या जृम्भा जृम्भणं, मुखव्यादानपूर्वकवायु-बहिर्निःसारणात्मकः, "हाइ" इति प्रसिद्धा, तया प्रसारितं विस्तारीभूतं, यत् मुखकुहरं वदनविवरं, तेन दृष्टः हृदयस्थितः कठिनः कठोरः, दुर्वहः इति यावत्, कार्य्यभारः कर्मबाहुल्यं यस्य तादृशः ।

(च) गुरुकः गुरुरेव गुरुकः महानित्यर्थः । स्वार्थे कन्-प्रत्ययः ।

(त) साहसैकरसेति ।—साहसे सहसा कृतेन क्रियमाणे कर्मणि, एकरसः एकमात्रानुरागस्य द्रवः, एकमात्र इच्छा वा, व्यवसायः उद्योगः यस्य तथाभूतस्य । चण्डचरितस्य उग्रस्वभावस्य, तीव्रपराक्रमस्य इति भावः ।

(थ) जानामि मन्ये ।

(द) प्रतिपालयन् प्रतीक्षमाणः ।

(ध) गोदानमङ्गले गोदानाख्ये उत्सवे कुमाराणां, अविवाहा समावर्तन

माल्यवान्। (निःश्वस्य)। अतिप्रबलोऽयममर्षो (न) यथा निवृत्तस्त्रीकरणा (प) जानकीति।

सूर्पणखा। अध इं। *

माल्यवान्। (विमृश्य)। अहो! दुरात्मनः क्षत्रियब्राह्मणस्य कुशिकजन्मनो दुर्नाटकम् (फ)—

यज्ञोपप्लवशान्तये परिवृढो राजा सुतं याचित-
स्तं चानीय विनीय चायुधविधौ ते जघ्निरे राक्षसाः।
शैवञ्च विदलय्य कार्मुकमथ स्त्रीकार्य्य सीतामितो
नो विघ्नः कुहनाविटेन वटुना किं तेन कारिष्यते ? ॥११॥

---

* अथ किम्।

---

छिद्रमिति भाव तथ्यम्। केचित्तु गर्भा चोषां, केशानामित्यर्थः, "गौर्वाऽऽदित्ये बलीवर्दे···। रश्मिदृग्बाणलोमसु॥" इति कोषः; दानं छेदनरूपं संस्कारकर्म, तदेव मङ्गलं तथ्यम्। "दो य च्छेदे" इत्यस्मात् भावे ल्युट्-प्रत्ययः।

(न) अर्थः विषयः।

(प) निवृत्तस्त्रीकरणा निवृत्तं समाप्तं, स्त्रीकरणम् आत्मीकरणं, पत्नीत्वेन परिग्रहणमित्यर्थः यस्याः सा तादृशी, समाप्तपरिणयेत्यर्थः। "निवृत्तस्त्रीकरणा" इत्यत्र "निर्वृत्तस्त्रीकरणा" इति पाठः साधुः; निर्वृत्तं सिद्धं, निष्पन्नमित्यर्थः, "सिद्धे निर्वृत्त-निष्पन्नौ" इत्यमरः; अन्यत् समानम्।

(फ) दुर्नाटकं दुष्टाभिनयः, दुश्चेष्टेति यावत्।

यज्ञेति।—यज्ञस्य उपप्लवः विघ्नः, तस्य शान्तये निवारणाय, परिवृढः प्रभुः, राजा दशरथः, सुतं पुत्रं, राममित्यर्थः, याचितः प्रार्थितः, विश्वामित्रेणेति शेषः, तञ्च सुतं रामम्, आनीय, आश्रममिति शेषः, आयुधविधौ अस्त्रविधाने, विनीय शिक्षयित्वा च, ते महाघोरत्वेन प्रसिद्धाः, राक्षसाः सुबाहुप्रभृतय इति यावत्, जघ्निरे निहताः; अनेनापि विश्वामित्रेणेति शेषः; अथानन्तरं, शैवं शाम्भवं, कार्मुकं धनुः, विदलय्य भञ्जयित्वा, सीतां स्त्रीकार्य्य परिणाय्य, कुहनाविटेन कुहनायां छद्मकर्मणि, विटः धूर्त्तः तथाविधेन, वञ्चनाचतुरेणेत्यर्थः, तेन वटुना ब्राह्मणेन, कौशिकेनेत्यर्थः, इतः परम् अस्माकं, किं कारिष्यते, रामेणेति शेषः, तत् नो विघ्नः न जानीमः। शार्दूलविक्रीडितं वृत्तम्॥११॥

शूर्पणखा। अज्ज! एव्वं णेदम्। सो मए तस्स बम्हणो वसिट्ठमहेसिणो वि फुरंतो (व) दिट्ठो। *

माल्यवान्। (विहस्य)। वत्से! तपोभिरस्य ब्राह्मणादेशोऽपि स्थानिवद्भावेन क्षत्रकार्य्यं न जहाति (भ)। किञ्च, स्वभावमधुरोऽपि काकुत्स्थवटुरौत्पत्तिकेन क्षात्रेण ब्राह्मण्येन च जन्मना त्रिजातकादस्मान्मुनेरधीयानोऽधरीणं परिणंस्यते (म)। तथा हि—

* आर्य्य! एवमेतत्। स मया तस्य ब्राह्मणो वशिष्ठमहर्षेरपि स्फुरन् दृष्टः।

(व) स ब्राह्मणः कौशिक इति यावत्। वशिष्ठमहर्षेरपि वशिष्ठ महर्षिमपेक्ष्यापीत्यर्थः, ल्यब्लोपे पञ्चमी। स्फुरन् दीप्यमानः।

(भ) ब्राह्मणादेशः क्षत्रियस्यापि ब्राह्मणत्वेनातिदेशः, ब्रह्मत्वे स्थितिरिति भावः, स्थानिवद्भावेन स्थानं स्थितिः, प्राक्तनधर्मः इत्यर्थः, तदस्यास्तीति स्थानी, स चासौ भाव इति:, तेन तुल्यं स्थानिवत्, तस्य भावस्तेन, उक्तञ्च मुग्धबोधे बोपदेवगोस्वामिना "स्थानिवदादेशः" इति। क्षत्रकार्य्यं क्षत्रियोचितमारणादिरूपं, न जहाति न त्यजति।

(म) स्वभावमधुरः निसर्गसुन्दरः। काकुत्स्थवटुः काकुत्स्थवंशीयब्रह्मचारी, राम इत्यर्थः। औत्पत्तिकेन उत्पत्तिर्जन्म तत्सम्बन्धिना, क्षात्रेण क्षत्रतेजसेत्यर्थः, ब्राह्मण्येन ब्रह्मतेजसा च, ततश्च ब्राह्मण्येन जन्मना तपोर्जितेन ब्राह्मण्यलाभेनेति भावः, त्रिजातकात् जन्मत्रययोगिनः, अत एव त्रिजातादिति वाक्पाठ्यमिति बोध्यं, मुनेर्विश्वामित्रात्, अधीयानः अध्ययनं कुर्वन्, अधरीणं धिक्कृतं, निन्दित यथा तथा इत्यर्थः, "अधरीणो धिक्कृतः" इति रभसः; "अधरीणः" इति पाठान्तरम्; परिणंस्यते निन्दितरूपेण परिणतो भविष्यति, अतस्तस्मादप्यधिक एव जायते इति भावः। पुरा स्वपत्न्याः गाधिनृपतेः सुतायाश्च पुत्रार्थं जमदग्निर्महर्षिश्चरुद्वयं कृतवान्। ततश्च तयोश्चर्वोरेकतमं ब्रह्मतेजसा अपरमं क्षत्रतेजसा अभिमन्त्रितमासीत्। तयोश्च ब्रह्मतेजोऽभिमन्त्रितं चरुभागं गाधिमहिषी अनवधानात् भक्षितवती। अपरं क्षात्रतेजोऽभिमन्त्रितं तत्कन्या रेणुका भक्षितवती। ततश्च गाधिसुतो विश्वामित्रः ब्राह्मतेजोऽभिमन्त्रितचरोरुत्पन्नत्वात् आदौ ब्राह्मण्यञ्च जन्मत एव लब्धवान्, पुनश्च तपसा ब्राह्मणत्वमित्यस्य त्रिजातकत्वमिति पुराणवार्त्ताऽत्रानुसन्धेया।

अविनयभुवामज्ञानानां शमाय भवन्नपि
प्रकृतिकुटिलाद्विद्याऽभ्यासः खलत्वविवृद्धये ।
फणिभयभृतामस्तूच्छेदक्षमस्तमसामसौ
विषधरफणारत्नालोको भयं तु भृशायते ॥ १२ ॥

भवतु, किमतिक्रान्तोपवर्णनेन (य)। कथं त्विदानीं स्वयं ग्रहीतुमुत्तिष्ठमानो (र) राक्षसपतिः प्रतिकर्त्तव्यः (ल) स्यात् ?

सुर्पणखा। अज्ज ! ण क्खु मोट्टिमं परिहरंतो (व) अण्णो उवाओ लक्खीअदि । *

माल्यवान्। वत्से ! मा मैवम्; महादोषो हि तादृशेन धर्म्मविजयिना वीरप्रवालेन परिगृहीताया वैदेह्याः प्रसह्यापहारः (श)। पश्य—

* आर्य्य ! न खलु मोट्टिमं परिहरतोऽन्य उपायो लक्ष्यते ।

अविनयभुवामिति ।—अविनयभुवां दुर्नयजनकानाम्, औद्धत्यसम्पादकानामित्यर्थः, अज्ञानानां शमाय शान्त्यै, भवन्नपि प्रभवन्नपि, प्रभुत्वन्नपीत्यर्थः, प्रकृतिकुटिलात् स्वभावक्रूरात्, जनादिति शेषः, विद्याऽभ्यासः विद्याशिक्षा, खलत्वस्य दौर्जन्यस्य, विवृद्धये विशेषेण वर्द्धनाय, भवतीति शेषः, तथा हि, असौ विषधरस्य भुजङ्गस्य, फणारत्नालोकः फणास्थितमणिप्रभा, फणिभयभृतां सर्पभीतिजनकानां, तमसाम् अन्धकाराणाम्, उच्छेदक्षमः विनाशसमर्थः, अस्तु भवतु, तु किन्तु, भयं भृशायते भृशम् अत्यर्थं भवतीत्यर्थः, प्रकृतिसुन्दरस्यापि दुर्जनसङ्गात् दौर्जन्यं जायते इति भावः । हरिणी वृत्तम् ॥ १२ ॥

(य) अतिक्रान्तोपवर्णनेन अतिक्रान्तस्य अतीतस्य, उपवर्णनेन आलोचनया ।

(र) स्वयमात्मना, ग्रहीतुम् आदातुं, वशीकर्तुमित्यर्थः, हर्तुमिति भावः, सीतामिति शेषः। उत्तिष्ठमानः यतमानः ।

(ल) प्रतिकर्त्तव्यः प्रतिविधेयः, निवारणीय इति यावत् ।

(व) मोट्टिमं बलात्कारम् । परिहरतः त्यजतः, रावणस्येति शेषः। "परिहरंतो" इत्यस्य "परिहरन्" इति संस्कृतः साधुः; बलात्कारं त्यजन्, बलात्कारं विनेत्यर्थः ।

(श) वीरप्रवालेन वीराङ्कुरेण, बालकवीरेणेति यावत् । प्रसह्यापहारः बलात् अपहरणं, महान् दोषो यत्र तादृशः ।

माल्यवान्। वत्से!—

मुनिरपि गुरुर्दिव्यास्त्राणां बभूव दिवौकसा-
मजगवधनुर्भङ्गे तावानहो! स महोत्सवः।
रघुपतिगुणक्रीतामेतामवेहि जगत्त्रयीं
विपरिणमते दौर्जन्यं तु प्रभुत्वमदेन नः॥ १४॥

शूर्पणखा। को संदेहो, तस्सिं विवाहमहूसवे सव्वं मए पच्चक्खीकिदं। *

माल्यवान्। तदेवमेकलोष्टवधः स्यात् (छ)। तथा हि, मिथिलां प्रविश्य बलादाकृष्यमाणे कलत्रे कथं तितिक्षेत (ज) रघुराजपुत्रः? तं चोत्तिष्ठमानं पौर-जानपद प्रकृतयोऽप्यनु-

* कः सन्देहः, तस्मिन् विवाहमहोत्सवे सर्वं मया प्रत्यक्षीकृतम्।

मुनिरिति।—मुनिः विश्वामित्रः, दिव्यानाम् अलौकिकानाम्, अस्त्राणां जृम्भका-दीनाम्, गुरुः आचार्य्यः, बभूव, रामं दिव्यास्त्रसम्प्रदाये सुशिक्षितमकरोदिति भावः, अहो! आश्चर्य्यम्, अजगवधनुः पिनाकः, "पिनाकोऽजगवं धनुः" इत्यमरः; तस्य भङ्गे दिवौकसामपि देवानामपि, तावान् अत्यधिक इति यावत्, स अस्माभिर्दृष्ट इत्यर्थः, महोत्सवः महान् आनन्दः, अभूदिति शेषः, देवधनुर्भङ्गे देवानां क्रोधो दूरेऽस्तु, प्रत्युत महोत्सव इति देवा अपि रामपक्षपातिन इति भावः, अतः एतां जगत्त्रयीं त्रिलोकीं, रघुपतेः रामस्य, गुणेन शौर्य्यादिना, क्रीताम् आयत्तीकृताम्, अवेहि जानीहि, तु परन्तु, केवलमिति भावः, नः अस्माकं, दौर्जन्यं खलत्वं, प्रभुत्वमदेन वयमेव जगत्प्रभव इति गर्वेण, विपरिणमते विपर्य्येस्यति, वयमेव रामविद्वेषिण इति भावः। हरिणी वृत्तम्॥ १४॥

(छ) तत् तस्मात्, एवं रावणेन बलात् सीताहरणं, कृते सतीति शेषः, एक-लोष्टेति।—एकस्य एकाकिनः, रावणस्येति भावः, लोष्टैः प्रस्तरखण्डैः, बहुभिर्जनैः प्रक्षिप्तैरिति भावः, वधः विनाशः, स्यात्।

(ज) कथं तितिक्षेत क्षमेत, नैव क्षमेतेत्यर्थः।

तिष्ठेरन्, किमङ्ग ! सम्बन्धिबान्धवाः ? (ख) यथोक्तम्—
"आरण्यः (ग) अग्निरिव दुःसहदुःखामर्षजं तेजो विक्रमयति, मण्डलस्य चानुग्राह्यो (घ) भवति" इति।

शूर्पणखा। (दीर्घमुष्णं च निःश्वस्य)। अज्ज ! किं दाणिं वुत्तं ? *

माल्यवान्। शृणु वत्से ! कार्य्यज्ञाऽसि। अस्ति वनौकसां (ङ) मन्त्री जाम्बवान्। स मतङ्गाश्रमवास्तव्यामुपहूय (च) श्रमणां नाम सिद्धशबरीमभ्यर्थितवान्, यथा अस्य वालिनो द्वैराज्येन क्षीणा लुब्धापवारिताः प्रकृतयः (छ) किष्किन्धायां

* आर्य्य ! किमिदानीं वृत्तम् ?

(ख) तत्र रामम्, उत्तिष्ठमानं युद्धाय उद्गच्छन्तं, रावणेन युध्यमानमिति यावत्। पौरेति।—पौराः पुरवासिनः, जानपदाः देशवासिनः, प्रकृतयः प्रधानपुरुषाः राजामात्यादयः। अनुतिष्ठेरन् राममनुसरेयुरित्यर्थः। किं, वक्तव्यमिति शेषः। अङ्ग ! सम्बोधने। सम्बन्धिबान्धवाः सम्बन्धिनः वैवाहिकसम्बन्धात् सम्पर्कविशिष्टाः, बान्धवाः स्वजनाः, एते यत् राममनुतिष्ठेरन् तत्र किं वक्तव्यम् ? इति भावः।

(ग) आरण्यः वन्यः।

(घ) दुःसहेति।—दुःसहेन सोढुमशक्येन, दुःखेन मनःपीडया इत्यर्थः, यः अमर्षः क्रोधः, तस्मात् तदुत्पन्नं, तेजः प्रतापः, सामर्थ्यविशेष इति यावत्, विक्रमयति प्रचण्डपराक्रमं प्रदर्शयति, महाविक्रान्तं योधयतीति यावत्। मण्डलस्य राजचक्रस्य, राजसमूहस्येत्यर्थः। अनुग्राह्यः अनुकम्पनीयः, अनुसरणीय इति भावः, दुःखभाक् जन इति शेषः।

(ङ) वनौकसां वानराणाम्।

(च) मतङ्गेति।—मतङ्गस्य मुनेः आश्रमे वास्तव्यं वासो यस्याः ताम्। उपहूय आहूय।

(छ) द्वैराज्येन राजद्वयेन, वालिराज्य सुग्रीवस्य च राज्य तयोर्द्वयोः आत्म-

कुमारसुग्रीवमभिषेक्ष्यमाणाः सामवायिकं राममद्रमपेक्षन्ते (ज)।

शूर्पणखा। (सातङ्कम्)। कधं खत्तिअपोदओ (झ) वालिं-णिग्गहे वि सहाओ समोहीअदि। तदो तदो? *

माल्यवान्। ततश्चायोध्यातः (ञ) कैकेय्या भरतवार्त्ताहरणाय (ट) प्रेषिता मन्थरा नाम स्थविरदासी (ठ) कठोरतरतरणितापवज्रानलज्वालाऽवलीढजीविता मिथिलाप्रान्तरे (ड) तिष्ठतीति निदाघकिरणान्तेवासी सतीर्थम् (ढ) ऋषिं याज्ञ-

* कथं क्षत्रियपोतको वालिनिग्रहेऽपि सहायः समीह्यते। ततस्ततः?

सात्कारयोगेनेति भावः। क्षीणाः दुर्बलाः, राज्यापहरणादिति भावः, लुब्धाः लोभपरायणाः, राज्याकाङ्क्षिण इत्यर्थः, अत एव अपसारिताः निवारिताः, राज्यात् बहिष्कृता इत्यर्थः प्रकृतयः प्रधानपुरुषाः, सुग्रीवामात्या इति यावत्।

(ज) अभिषेक्ष्यमाणाः राजपदे निषिक्तं करिष्यन्त इति यावत्। सामवायिकं समवायात् सङ्घात् सङ्गच्छतीति तथोक्तं, सहायकमिति यावत्। अपेक्षन्ते प्रतीक्षन्ते, रामं सहायं कृत्वा वालिनिग्रहाय यतन्ते इति भावः।

(झ) क्षत्रियपोतकः क्षत्रियशिशुः।

(ञ) अयोध्यातः अयोध्यानगरात्।

(ट) भरतेति।—भरतस्य विवाहार्थं मिथिलां गतस्येति भावः, वार्त्ताहरणाय संवादानयनार्थम्।

(ठ) स्थविरदासी वृद्धा किङ्करी।

(ड) कठोरेति।—कठोरतरः अतिदुःसहः, तरणितापः सूर्य्यसन्ताप एव, वज्रानलः अशनिनिःसृताग्निः, तस्य ज्वालाभिः शिखाभिः, सन्तापैरिति यावत्, अवलीढम् आक्रान्तं, जीवितं यस्याः तथाविधा। मिथिलाप्रान्तरे मिथिलायाः दूरशून्ये छायाजलादिविरहिते अध्वनि, "प्रान्तरं दूरशून्योऽध्वा" इत्यमरः।

(ढ) निदाघेति।—निदाघकिरणस्य उष्णरश्मेः, सूर्य्यस्येत्यर्थः, अन्तेवासी शिष्यः। सतीर्थं सहाध्यायिनम्, एकगुरुकमिति यावत्, याज्ञवल्क्यहनूमतोरुभयोरेव सूर्य्यशिष्यत्वात् सतीर्थत्वम्। "सतीर्थ्यास्त्वेकगुरवः" इत्यमरः।

सवितारमुपस्थाय (ण) सम्प्रत्येव निमेषमात्रान्निवृत्तो हनूमान् कथयति। अतस्त्वमप्यस्मदनुरोधेन हनूमत्प्रत्यवेक्षित-स्वशरीरा परपुरप्रवेशविद्यया (त) मन्थराशरीरमधितिष्ठन्ती (थ) मिथिलामुपेत्य प्रत्ययिता संविधानकमिदं दशरथगोचरीकरिष्यसि (द)। इत्थम्भाविना (ध) गुरुनिर्देशचर्य्याप्रसङ्गेन (न) पङ्क-पाषाण-विषम-कण्टक-व्यालकुल-बहुलामरण्यानीम् (प) अनुप्रविष्टः सर्वथा वैदेशिको राजपुत्रः (फ) कार्य्यगौरवान्नियतमेव (ब) वालिवधपूर्वकेण प्रतीकारसन्धिना सम्बन्धेन सुग्रीवमुपग्रहीष्यतीति (भ)।

---

(ण) उपस्थाय आराध्य, वन्दित्वेत्यर्थः।

(त) हनूमदिति।—हनूमता प्रत्यवेक्षितम् अवधानेन रक्षितं, यद्वा—प्रत्यवेक्षितं प्रतिकूलदृष्टं, द्रष्टुमशक्यमिति भावः, स्वशरीरं निजदेहः यस्याः तथाभूता। परपुरेति।—परस्य पुरं शरीरं, तस्मिन् प्रवेशविद्यया प्रवेशसाधनया विद्यया।

(थ) अधितिष्ठन्ती आश्रयन्ती।

(द) प्रत्ययिता जनितविश्वासा। संविधानकं कर्म वक्ष्यमाणं रामवनवास-भरत-राज्यदानरूपं कैकेय्या अभिप्रेतमिति भावः। दशरथगोचरीकरिष्यसि दशरथाय निवेदयिष्यसीत्यर्थः।

(ध) इत्थम् अनेन प्रकारेण, एवंविधकौशलेनेति यावत्, भाविना भविष्यता।

(न) गुरुनिर्देशेति।—गुरोः पितुः, निर्देशः आज्ञा, तस्य चर्य्या प्रतिपालनं, तत्-प्रसङ्गेन तदनुरोधेनेत्यर्थः।

(प) पङ्केति।—पङ्कैः कर्दमैः, पाषाणैः प्रस्तरैश्च, विषमा अवनतोन्नता, तथा कण्टकैः व्यालकुलैः हिंस्रजन्तुवृन्दैश्च, बहुला पूर्णा ताम्। अरण्यानीं महारण्यं, "महारण्यमरण्यानी" इत्यमरः।

(फ) वैदेशिकः भिन्नदेशभवः, तत्तदरण्यप्रदेशमार्गानभिज्ञ इति भावः। राजपुत्रः रामः।

(ब) नियतमेव निश्चितमेव।

(भ) प्रतीकारसन्धिना प्रतीकारे साहाय्यकरणे, सुग्रीवकर्तृके इति भावः, सन्धिः आश्रयः यत्र तथाभूतेन, यद्वा—प्रतीकाराय वालिकर्तृकदारापहरणस्य प्रतिविधानाय,

शूर्पणखा। (सकौतुकम्)। अज्ज! किं तं संविहाणअं? *

माल्यवान्। (कर्णे)। एवमेवम्। (इति कथयति)।

शूर्पणखा। (हसन्ती)। अहो! वुड्ढस्स (म) कुडिलदा। तदो तदो? †

माल्यवान्। ततश्च साऽपि श्रवरयोगिनी (य) सुग्रीवगुणानुरोधेन सर्वमोमित्युररीकृत्य (र) तदैव विदेहाभिमुखी (ल) प्रस्थितेति मे जनस्थानविहारिभिः (व) निशाचरैरागत्य निवेदितम्। तदमुना च जाम्बवत्प्रयोगेण फलता (श) विराधप्रभृतिभिरधिष्ठितेषु विन्ध्यगिरिगह्वरेषु विहरतो रामस्य सुकरं कलत्रापहरणम्। अस्मदीयास्तु मायाः (ष) सुरासुरप्रथमरेखयोधस्य (स) युद्धमुदितविबुधपतिना

* आर्य्य! किं तत् संविधानकम्?

† अहो! वृद्धस्य कुटिलता। ततस्ततः?

सन्धिमेलनं यत्र तेन; यद्वा—प्रतीकारसन्धिः परस्परोपकारकरणार्थं सम्मेलनं तथाभूतेन, उक्तञ्च चाणक्येन—"मयाऽस्योपकृतं पूर्वमयं मामुपकरिष्यति। इति यः क्रियते सन्धिः प्रतीकारः स उच्यते॥ उपकारं करोम्यस्य ममाप्येष करिष्यति। अयं चाऽपि प्रतीकारो राम-सुग्रीवयोरिव॥" इति, सख्येन संश्रयेण। उपग्रहीयात् सहायं कुर्य्यादित्यर्थः।

(म) वृद्धस्य स्थविरभल्लूकस्य।

(य) श्रवरयोगिनी शिवश्रवरी।

(र) ओम् इति अनुमतार्थकमव्ययम्; "ओमेवं परमं मतम्" इत्यमरः। उररीकृत्य हृदये कृत्वेत्यर्थः। "उररीकृत्य" इति पाठे—स्वीकृत्येत्यर्थः।

(ल) विदेहाभिमुखी मिथिलाभिमुखी।

(व) जनस्थानविहारिभिः दण्डकारण्यान्तर्गतस्थानविशेषसञ्चारिभिः।

(श) जाम्बवत्प्रयोगेण जाम्बवतः कौशलेन। फलता सिद्धिं गच्छता।

(ष) मायाः कपटाचरणानि, शाम्बरीविद्या वा, अदृश्यीभवनादिरूपा इति भावः "स्यान्माया शाम्बरी" इत्यमरः।

वितीर्णमायाहरणमन्त्रधारिणो (छ) दशरथस्य सन्निधौ न प्रभवन्ति (क)।

शूर्पणखा। (सविचिकित्सम् (ख))। अज्ज! उववण्णस्स एव्वं (ग) करीअदि। *

माल्यवान्। (विहस्य)। वत्से! साधु, बुद्धसंवादिनी (घ) ते दृष्टिः (ङ)। यदाहुः,—"यो ह्युपनतस्य पुत्रदारानतिमन्यते, तस्योद्विग्नं मङ्गलमभावायोपतिष्ठते" इति। किं पुनरस्मासु नैष निसर्गतेजस्वी संश्रयप्रवृत्तिमातिष्ठते? (च)

---

* आर्य्य! उपपन्नस्यैवं क्रियते।

---

(छ) सुरासुरेति।—सुरासुरयोः देव-दानवयोर्मध्ये, प्रथमा श्रेष्ठा, रेखा सङ्ख्याङ्को यस्य तथाभूतो यो धीरः वीरः तस्य, अग्र्यवीरस्येति यावत्।

(छ) युद्धेति।—युद्धेन देवासुरसङ्ग्रामे देवपक्षसमवलम्ब्य युद्धकरणेन, युद्धे दैत्यविनाशनेनेति भावः, मुदितः प्रीतः, विबुधानां देवानां, पतिरिन्द्रः तेन। वितीर्णेति।—वितीर्णः दत्तः, यः मायाहरणमन्त्रः आसुरीविद्याप्रभावविनाशनमन्त्रः, तं धारयति वहति, जानातीत्यर्थः तथोक्तस्य।

(क) न प्रभवन्ति न प्रभाव प्रदर्शयितुं शक्नुवन्ति, न किञ्चित् प्रभवन्तीति भावः।

(ख) सविचिकित्सं ससंशयम्।

(ग) उपपन्नस्य समीपागतस्य, रामस्येति शेषः, एवं सम्भावपहरणमिति यावत्।

(घ) बुद्धसंवादिनी बुद्धानां प्रवयसां, विज्ञानामिति यावत्, संवादिनी सङ्कीर्त्तिनी अनुकारिणी वा।

(ङ) दृष्टिः ज्ञानम्।

(च) उपनतस्य समीपागतस्य, शरणागतस्येति यावत्। अतिमन्यते हरतीत्यर्थः। मङ्गलं राज्यम्, उद्विग्नं शङ्कितं, कदाचिदस्मात्कमपि एवं करिष्यतीति शङ्कयेति भावः। अभावाय विनाशाय। उपतिष्ठते परिणमति। किं पुनः किन्तु, निसर्गतेजस्वी स्वभावेन तेजस्वी, एष राम इति यावत्। संश्रयप्रवृत्तिं समाश्रयेण वर्त्तनं, न नैवेत्यर्थः, आतिष्ठत अङ्गीकरोति।

शूर्पणखा। हुं, (क) अण्णं भणामि, अवि एव्वं (ख) करिस्सदि रामभद्दो ? *

माल्यवान्। कः संशयः (झ)। लोकोत्तरं हि किमपि उन्मीलयन्तो (ञ) जगति राज्योपभोगेभ्योऽपि बीभत्सन्ते महानुभावाः (ट)।

शूर्पणखा। अण्णं वि किं वि अणत्थंतरं (ठ) अत्थ पड़िदं मिति तक्केमि। †

माल्यवान्। (सहर्षम्)। किं तत् ?

शूर्पणखा। मए जणअणअरादो (ड) णिक्कंतीए सुदं, यधा— खुड़िदसिरिकंठसरासणस्स (ढ) दासरहिणो मच्छरेण (ण) समत्तखत्तिअकिदंतो परसुरामो परागदो (त) त्ति। ‡

---

* हुम्, अन्यत् भणामि। अप्येवं करिष्यति रामभद्रः ?

† अन्यदपि किमप्यनर्थान्तरमत्र पतितमिति तर्कयामि।

‡ मया जनकनगरान्निष्क्रान्तया श्रुतं, यथा—त्रुटितश्रीकण्ठशरासनस्य दाशरथेर्मात्सर्येण समस्तक्षत्रियकृतान्तः परशुरामः परागत इति।

---

(क) हु प्रश्न, "हुं प्रश्नेऽङ्गीकृतौ रोषे" इति विश्वः।

(ख) अपि प्रश्ने। एवं पितृनियोगेन दण्डकारण्यप्रवेशमिति भावः।

(झ) कः संशयः संशयो नास्तीत्यर्थः।

(ञ) लोकोत्तरम् अलौकिकं, किमपि अनिर्वचनीयमित्यर्थः, वस्तु इति शेषः। उन्मीलयन्तः प्रकटयन्तः।

(ट) बीभत्सन्ते जुगुप्सन्ते, राज्यभोगादीन् तुच्छीकृत्य निन्दन्तीत्यर्थः। महानुभावाः महाप्रभावाः।

(ठ) अनर्थान्तरम् अनिष्टविशेषः।

(ड) जनकनगरात् मिथिलातः।

(ढ) त्रुटितेति।—त्रुटितं दलितं, श्रीकण्ठस्य हरस्य, शरासनं धनुः येन तथाभूतस्य।

(ण) मात्सर्येण विद्वेषेण, "मत्सरोऽन्यशुभद्वेषः" इत्यमरः।

(त) परागतः समागतः।

भाव्यताम्। (सहर्षम्)। सर्वमुपपद्यते (थ)—

भुजार्गलितनर्मदामकरचक्रदंष्ट्राङ्कुर-
व्रणप्रकरकर्कशं किमपि बिभ्रदुग्रं वपुः।
स येन परशौ हुतो नृपतिरर्जुनः कौतुका-
दसौ कथमुपेक्षते गुरुधनुर्व्यलीकं मुनिः? ॥ १५ ॥

परन्तु (द) अनेनापि सकलमूर्द्धाभिषिक्तकण्ठकाण्ड-रुधिरावसेकपङ्किलकुठारेण दुरभिभवो (ध) दाशरथिः।

---

(थ) उपपद्यते युज्यते, तवागमनं युक्तमेवेत्यर्थः।

भुजेति।—भुजाभिर्बाहुभिः, सहस्रेणेति भावः, अर्गलिताया: प्रतिरुद्धायाः, नर्मदायाः सोमोद्भवाख्य-नदीभेदस्य, यानि मकरचक्राणि जलजन्तुविशेषाः, तेषां दंष्ट्राङ्कुरैः सूक्ष्माग्रदशनैः, यः व्रणप्रकरः क्षतसमूहः, तेन कर्कशं परुषं, पुनः पुनः दन्ताघातेन सञ्जातकिणत्वात् कठिनमिति यावत्, किमपि अन्यत्रादृष्टपूर्वम्, उग्रं भीषणम्, उन्नतं वा, वपुः शरीरं, बिभ्रत् दधानः, सः प्रसिद्धः नृपतिरर्जुनः कार्त्तवीर्य्यार्जुनः, येन कौतुकात् अवलीलयेत्यर्थः, परशौ कुठारे, हुतः दग्धः, विनाशित इति यावत्, असौ मुनिः परशुरामः, गुरोः शिवस्य, धनुर्व्यलीकं चापविषयकाप्रियानुष्ठानं, धनुर्भङ्गापराधमित्यर्थः, "व्यलीकमप्रियाकार्य-वैलक्ष्येष्वपि पीडने" इति विश्वः; कथम् उपेक्षते? सहते? नैव सहते इत्यर्थः। पुरा बाहुभिर्नर्मदाया जलस्रोतांसि रुद्ध्वा जलक्रीडां कुर्वतः कार्त्तवीर्य्यस्याङ्गानि जलजन्तुभिः क्षतानीति प्रसिद्धिः। पृथ्वीवृत्तं— "ज-सौ ज-स-य-ला वसुग्रहयतिश्च पृथ्वी गुरुः" इति तल्लक्षणात् ॥ १५ ॥

(द) परन्तु किन्तु।

(ध) सकलेति।—सकलानां मूर्द्धाभिषिक्तानां क्षत्रियाणां, "मूर्द्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट्" इत्यमरः; कण्ठाः गलदेशाः एव, काण्डाः वृक्षस्य मूलाच्छाखावधि स्थूलभागाः, तेभ्यः रुधिरावसेकेन रक्तस्रावेण, पङ्किलः कर्दमितः, कुठारो यस्य तथाभूतेन। दुरभिभवः दुर्जयः।

शूर्पणखा । (साभ्यसूयम् (न) )। अहो ! दुद्धमुहे (प) तस्सिं खत्तिअवटुए (फ) एव्व संभावेदि मादामहो । *

माल्यवान् । वत्से ! नैतज्जानासि ?—

सर्वराजकदुर्धर्षं सर्वदेवमयं धनुः ।
भञ्जता रामभद्रेण विजिग्ये भुवनत्रयम् ॥ १६ ॥

इदानीं तु—

राजन्यरुधिराम्भोधि-कृतत्रिषवणो मुनिः ।
प्राप्तः परशुरामोऽयं न विद्मः किं करिष्यति ॥ १७ ॥

तदेहि राजकुलमेव गच्छावः । (इति निष्क्रान्तौ)।

विष्कम्भकः ।

(नेपथ्ये)। भो भो जनकाग्निहोत्रपरिचारकाः ! पाद्यं पाद्यम् । अर्घोऽर्घः (ब) ।

* अहो ! दुग्धमुखे तस्मिन् क्षत्रियबटुके एवं सम्भावयति मातामहः ।

(न) साभ्यसूय गुणेषु दोषारोपणमभ्यसूया, तत्सहितं रामगुणप्रकटनासहनपुरःसरमित्यर्थः ।

(प) दुग्धमुखे दुग्धपोष्ये, अतिशिशाविति भावः ।

(फ) क्षत्रियबटुके क्षत्रियबालके ।

सर्वेति ।—सर्वैः राजकैः राजन्यैः, दुर्धर्षं धर्षितुमशक्यम्, अनमनीयमिति यावत्, अनुमशक्यमित्यर्थो वा, सर्वदेवमयं सर्वदेवतात्मकं, सर्वेषां देवानां तेजोभिर्निर्मितत्वादिति भावः, धनुः भञ्जता रामभद्रेण भुवनत्रयं विजिग्ये जितमित्यर्थः । सर्वजनदुष्करकर्मकारी सर्वविजयी ख्यात एव भवतीति भावः । अनुष्टुप् वृत्तम् ॥ १६ ॥

राजन्येति ।—राजन्यानां क्षत्रियाणां, रक्तेन कृतानामिति भावः, रुधिराम्भोधौ शोणितसागरे, कृतं त्रिषवणं त्रिसन्ध्यस्नानं येन तादृशः, मुनिः परशुरामः, प्राप्तः उपस्थितः, अयं किं करिष्यति किमनुष्ठास्यति, न विद्मः न जानीमः, अत्र वाक्यार्थः कर्म । अनुष्टुप् वृत्तम् ॥ १७ ॥

(ब) जनकेति ।—जनकस्य विदेहाधिपतेः, यत् अग्निहोत्रं तदाख्ययागविशेषः, अग्नौ होमाधिकारस्थः, तस्य परिचारकाः भृत्याः । पाद्यं पादप्रक्षालनार्थं जलम्, आनीयतां दीयतां वा इति शेषः । अर्घः पूजा, "अर्घः पूजने मूल्ययोः" इति विश्वः ;

आजन्मब्रह्मचारी पृथुलभुजशिलास्तम्भविभ्राजमान-
ज्याऽऽघातश्रेणिसंज्ञाऽन्तरितवसुमतीचक्रजैत्रप्रशस्तिः ।
वक्षःपीठे घनास्त्रव्रणकिणकठिने संक्ष्णुवानः पृषत्कान्
प्राप्तो राजन्यगोष्ठीवनगजमृगयाकौतुकी जामदग्न्यः ॥ १८ ॥

अपि च—

एष स्त्रैणकपोलकुङ्कुमलिपिस्तेयातिभीरौ भुजे
बिभ्राणश्चतुरन्तराजविजयि ज्यानाटरौद्रं धनुः ।
तूणाविव पुनस्तरां दृढयति स्वादन्तरस्मात्पटा-
टाकृष्टैः कुशचीरतन्तुभिरभिक्रुद्धो मुनिर्भार्गवः ॥ १९ ॥

---

क्रियतामिति शेषः ; "अर्घोऽर्घः" इत्यत्र "अर्घ्यम् अर्घ्यम्" इति पाठे—अर्घार्थं पूजार्थं, देयं जलम्, "अर्घ्यमर्घार्थे पाद्यं पादाय वारिणि" इत्यमरः ; त्वरया आदरेण वा द्विरुक्तिः ।

आजन्मेति ।—आजन्म जन्मन आरभ्य, ब्रह्मचारी अनुष्ठितब्रह्मचर्यः, सांसारिकसुखभोगविमुख इति भाव, पृथुलौ महान्तौ, भुजावेव शिलास्तम्भौ पाषाणनिर्मितस्तम्भौ, तत्स्वरूपौ भुजौ इत्यर्थः, तयोः विभ्राजमाना विशेषेण राजमाना, सुस्पष्टं लक्ष्यमाणा इति यावत्, या ज्याऽऽघातश्रेणिः मौर्वीकर्षणजनितकिणराजिः, तस्याः संज्ञया नाम्ना, तद्व्यपदेशेनेत्यर्थः, अन्तरिता आच्छादिता, वसुमतीचक्रस्य भूमण्डलस्य, जैत्रप्रशस्तिः जयप्रशंसा यस्य तथोक्तः, ज्याऽऽघातपङ्क्तिव्याजेन अङ्किता जयप्रशस्तिः विभातीति भावः, घनानां कठिनानाम्, अस्त्राणां शरादीनां, व्रणैः क्षतैः, ये किणाः मांसग्रन्थयः, तैः कठिने कर्कशे, वक्षःपीठे वक्षोरूपासनफलके इति यावत्, पृषत्कान् बाणान्, संक्ष्णुवानः तेजयन्, आघर्षणेन तीक्ष्णीकुर्वन् इत्यर्थः, राजन्यगोष्ठी क्षत्रियसमूह एव, वनगजाः आरण्यहस्तिनः, तेषां मृगयायां कौतुकी स्पृहयालुरित्यर्थः, जामदग्न्यः परशुरामः, प्राप्तः उपस्थितः । स्रग्धरा वृत्तं—"म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्" इति तल्लक्षणात् ॥ १८ ॥

एष इति ।—एष मुनिः भार्गवः परशुरामः, अभिक्रुद्धः अत्यर्थं कुपितः, ऐशधनुर्भङ्गादिति भावः, अत एव स्त्रैणाः स्त्रीसम्बन्धिनः, क्षत्रियाणामिति शेषः, कपोलाः गण्डस्थलाः, तेषु या कुङ्कुमलिपिः काश्मीरजविरचितपत्रलेखा, तस्याः स्तेयेन चौर्येण, वैधव्यसम्पादनात् दूरीकरणेनेति यावत्, अतिभीरौ अतिशङ्किते, भुजे बाहौ, चोरस्य सततं शङ्कितभावेनावस्थानस्य स्वाभाविकत्वादिति भावः, चतुरन्तराजविजयि चतुर्षु अन्तेषु दिगन्तेषु, दिक्षु इति यावत्, ये राजानः क्षत्रियाः, तेषां विजयि चतुर्दिगन्तव्याप्त-

( ततः प्रविशति अस्त्रापहस्तः क्रोधोद्धतो जामदग्न्यः )।

जामदग्न्यः। ( सखेदम् )। अहह !! यथा सृष्टभोजिना कृतान्तेन ( भ ) प्रत्यवसितास्ते सांयुगीनाः (म)। वर्त्तमाने तु (य)—

शस्त्राशस्त्रिकथैव का ? नवभवद्गीर्वाणपाणिन्धमाः
पन्थानो दिवि सङ्कुचन्ति वसुधा वन्ध्या न सूते भटान्।
लक्ष्मीरप्यरविन्दसौधवलभीनिर्व्यूहपर्य्यङ्किका-
विश्रान्तैरलिभिर्न कुञ्जरघटागण्डोद्गतैर्मोदते ॥ २० ॥

ङ्विषयजैत्र, ज्याघाटेन मौर्वीशब्देन, रौद्रं भीषणं, धनुः बिभ्रत् दधानः सन्, स्वात् निजात्, अन्तरस्मात् अन्तरीयात् परिधानादित्यर्थः, "अन्तरमवकाशावधिपरिधानान्तर्द्धि-भेदतादर्थ्ये" इत्यमरः; पटात् वस्त्रात्, आकृष्टैः कुशचीरतन्तुभिः सूक्ष्मवल्कलसूत्रैः, कुशनिर्मितवल्कलवसनरज्जुभिरिति वा, तूणीरेव बाणपूर्णतूणीरावेव, पुनस्तराम् अतिशयेन, दृढयति दृढीकरोति। "चतुरन्तरीपविजयी" इति पाठे—चतुरन्तरीपस्य चतुर्द्वीपस्य विजयीत्यर्थः। शार्दूलविक्रीडितं वृत्तम् ॥ १९ ॥

(भ) सृष्टभोजिना सृष्टं स्वादु, यद्वा—सृष्टं शोधितं, विशुद्धमित्यर्थः, भुङ्क्ते इति तथोक्तेन, "निर्णिक्तं शोधितं सृष्टम्" इत्यमरः; कृतान्तेन यमेन।

(म) प्रत्यवसिताः खादिताः, "प्रत्यवसितगिलितखादितप्सातम्" इत्यमरः, ते सहस्रार्जुनादय इत्यर्थः। सांयुगीनाः रणपण्डिताः, "सांयुगीनो रणे साधुः" इत्यमरः। जगति वीरोत्तमा इदानीं न विद्यन्ते, यैः सह रणव्यापारेण आत्मनो युद्धकण्डूतिं निवारयामि इति परशुरामस्य खेदकारणम् "अहह" इत्यनेन प्रकटीभवति इति भावः।

(य) वर्त्तमाने तु सम्प्रति तु।

शस्त्राशस्त्रिकथेति।—शस्त्रैश्च शस्त्रैश्च प्रहृत्य यत् युद्धं वृत्तं तत् शस्त्राशस्त्रि, तस्य कथैव वार्त्तैव, का ? नास्तीत्यर्थः, सम्मुखसमरं नास्त्येव इति भावः, नवाः नूतनाः, भवन्तः सम्पद्यमानाः, ये गीर्वाणाः देवाः, सङ्ग्रामहतानां क्षत्रियाणां सद्यो देवत्वलाभा-दिति भावः, तेषां पाणीन् धमन्ति पीडयन्तीति तथोक्ताः, सङ्ग्रामहतानामसङ्ख्याततया सङ्कटगमनादिति भावः, पन्थानः स्वर्गगमनमार्गाः, दिवि अन्तरीक्षे, सङ्कुचन्ति ह्रस्वीभवन्ति, गमनागमनाभावात् न स्फुरन्तीति यावत्, सङ्ग्रामहतवीराभावादिति भावः, वसुधा पृथ्वी, वन्ध्या जननशक्तिरहिता, अतः भटान् वीरान्, न सूते न जनयति, लक्ष्मीरपि जयश्रीरपि, कुञ्जरघटानां साङ्ग्रामिकगजानां, गण्डेभ्यः कपोलेभ्यः, मदवारिसिक्तेभ्य इति भावः, उद्गतैः निर्गतैः, अरविन्दमेव पद्ममेव, सौधं हर्म्यं, तस्य या वलभी शिरोगृहं, तत्र निर्व्यूहपर्य्यङ्किका नागदन्तनिर्मितपर्य्यङ्कः, "निर्व्यूह

( सविमर्शाश्चर्यम् (र) )—

शम्भुर्यद्गुणवल्लरीमुपनयत्याकर्ष्य कर्णान्तिकं
भ्रश्यन्ति त्रिपुरावरोधसुदृशां कर्णोत्पलग्रन्थयः ।
स्वं चास्फालयति प्रकोष्ठकमिमामुन्मुच्य तासामहो !
भिद्यन्ते वलयानि दाशरथिना तद्भग्नमैशं धनुः ॥ २१ ॥

( सरोष-विकटं परिक्रामन् )। भो भो विदेहाः ! ( ल ) स रामो दाशरथिः ?—

यस्मिन्नर्जुनदोःसहस्रनलकप्रोच्छ्वसच्छ्रच्छटा-
जिह्वाले जुहवाम्बभूविम रुषा राजन्यसत्त्वामपि ।

---

शेखरे द्वारे निर्व्यासे नागदन्तके" इति विश्वः ; तत्र विश्रान्तैः अलिभिः भ्रमरैः, न मोदते न प्रीतिमनुभवतीत्यर्थः, वीराभावेन युद्धाभावात्, युद्धाभावेन च साङ्ग्रामिक-मृगाभावादिति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ २० ॥

(र) सविमर्शं सवितर्कम् ।

शम्भुरिति ।—शम्भुः शिवः, यस्य धनुषः, गुणवल्लरीं मौर्वीलताम्, आकृष्य कर्णान्तिकं कर्णसान्निध्यम्, उपनयति प्रापयति, किन्तु त्रिपुरावरोधसुदृशां त्रिपुरासुरान्तः-पुरस्त्रीणां, कर्णोत्पलग्रन्थयः कर्णोत्पलानां सन्धिबन्धनानि, भ्रश्यन्ति प्रच्यवन्ति, तथा इमां यद्गुणवल्लरीम्, उन्मुच्य विमुच्य, स्वं निजं, प्रकोष्ठकं कफोणेरधोभागम्, आस्फालयति सन्ताडयति च, शम्भुरिति पूर्वेणान्वयः, किन्तु तासां त्रिपुरावरोधसुदृशां, वलयानि कङ्कणानि, भिद्यन्ते भज्यन्ते, येन धनुषा त्रिपुरशोणितां पतिवधात् कर्णोत्पलादीनां विलासभूषणानां भंश इति भावः, दाशरथिना रामेण, तत् पूर्वोक्त-रूपम्, ऐशं शाम्भवं, धनुः भग्नम्, अहो ! एतदाश्चर्यम् । अन्येषां कर्णान्तिकनयने अपरासां कर्णोत्पलभ्रंश इति, तथा एकस्य प्रकोष्ठास्फालने अपरासां वलयभङ्ग इति च कार्य-कारणयोर्भिन्नदेशतायामसङ्गतिरलङ्कारः, तदुक्तं दर्पणे—"कार्य-कारणयोर्भिन्नदेशतायामसङ्गतिः" इति । शार्दूल-विक्रीडितं वृत्तम् ॥ २१ ॥

(ल) विदेहाः मैथिलाः, मिथिलावासिन इत्यर्थः ।

यस्मिन्निति ।—अर्जुनस्य कार्तवीर्यस्य, दोषां भुजानां, सहस्रमेव नलकं "नल" इति प्रसिद्धच्छिद्रपदार्थविशेषः, यद्वा—दोःसहस्राणां नलकं कफोणादधोऽस्थिविशेषः, तस्मात् प्रोच्छ्वसन्ती निःसरन्ती, या असृक्छटा रुधिरधारा, तया जिह्वाले रसनाग्निशिखोपमे, ज्वालाविशिष्टत्वात् अग्निरूपमात्रे इति भावः, ताम्र परशौ, रुषा क्रोधेन, राजन्यानां

सोऽयं प्राक्तनचापखण्डविघसीभूतेष्वपि क्षत्रिय-
क्षुद्रेषु क्षुधितश्चिरेण परशुस्तेनायमन्विष्यते ॥ २२ ॥

( ततः प्रविशति सधैर्य-प्रमोदो दाशरथी रामः ) ।

रामः ।—

साकं शक्तिधरेण तत्रभवतो देवाद्भवानीपते-
र्यः सम्यञ्चमवाप चापनिगमं सम्यञ्चि सामानि च ।
शूराणाञ्च तपस्विनाञ्च परमां काष्ठामधिष्ठास्नुभि-
स्तेजोभिर्भगवानसौ भृगुपतिर्दिष्ट्याऽद्य द्रक्ष्यते ॥ २३ ॥

जामदग्न्यः । ( सखेदोपालम्भमात्मानं प्रति )—

भग्नाङ्कुरेति सुरलोकलहे कुमार-
मप्याक्षिपन् परुषरोषरसान्धचेताः ।
हृष्टोऽस्मि यः कृतमिथोहसितं शिवाभ्यां
तस्यापभङ्गमपि हा ! सघृणः शृणोमि ॥ २४ ॥

---

क्षत्रियाणां, सतामपि वर्त्तमानामपि, जुहवाञ्चभूविम हुतवन्तः, वयमिति शेषः, येन परशुना क्षत्रियान् उन्मूलयामासिमेत्यर्थः, सोऽयं परशुः कुठारः, प्राक्तनचापखण्डस्य प्राचीनधनु-खण्डनस्य, विघसीभूतेषु भोजनशेषरूपेषु, पुरा यत् चापखण्डनं कृतं तस्य शेषभूतेषु इत्यर्थः, "अमृतं विघसो यज्ञशेष-भोजनशेषयोः" इत्यमरः; क्षत्रियक्षुद्रेषु अपि राजन्याधमेषु सत्स्वपीत्यर्थः, चिरेण क्षुधितः क्षुधापीडितः, भोज्याभावादिति भावः, वर्त्तते इति शेषः, तेन परशुना हेतुना, यद्वा—परशोः क्षुधितत्वेन हेतुना, अयं रामः अन्विष्यते अनुसन्धीयते, मयेति शेषः । यद्वा—तेन परशुना इति कर्तृपदम् । शार्दूल-विक्रीडितं वृत्तम् ॥ २२ ॥

साकमिति ।—यः परशुरामः, शक्तिधरेण स्कन्देन, साकं सह, तत्रभवतः पूज्यात्, देवात् भवानीपतेः हरात्, सम्यञ्चं सम्यग्रूपं, चापनिगमं धनुर्वेदं, सम्यञ्चि सम्यग्रूपाणि, सामानि सामवेदांश्च, अवाप प्राप्तवान्, शिक्षितवानित्यर्थः, शूराणाञ्च वीराणाञ्च, तपस्विनाञ्च मुनीनाञ्च, परमां काष्ठाम् उत्कर्षम्, अधिष्ठास्नुभिः आश्रयद्भिः, तेजोभिः प्रभावैः, उपलक्षित इति शेषः, विशेषणे तृतीया, महावीरस्य महामुनेश्चेति भावः, असौ अयं, भगवान् भृगुपतिः परशुरामः, दिष्ट्या भाग्येन, अद्य द्रक्ष्यते प्रेक्षिष्यते, मयेति शेषः । शार्दूलविक्रीडितं वृत्तम् ॥ २३ ॥

भग्नेति ।—योऽहं, परुषं निष्ठुरम्, अत एव रोषरसेन कोपावेशेन, अन्धं

( विमृश्य च )। अहो! मामरण्यनिवासिनमुपश्रुत्य दुरात्मना रघुकुटुम्बकेन दूरमुच्छ्वसितम् ( ख )। ( किञ्चिद्रुषः )—

रे काकुत्स्थाः! कथं वः श्रुतिविषयमयं नागमद्भार्गवीयो
दुःसामन्तापचारप्रचितपितृवधामर्षनिस्तारबन्धुः।
वारानामेकविंशान् विशसितविषमक्षत्रजातिप्ररोहः
क्रोधादुत्कृत्तगर्भामिषरुधिरवसाविस्रगन्धिः कुठारः? ॥ २५ ॥

विमूढमिति यावत्, चेतः चित्तं यस्य तथाभूतः सन्, खुरलीकलहे अस्त्राभ्यास-विवादे अस्त्रयोग्याकरणविवादे वा, शरनिक्षेपाभ्यासकाले इति यावत्, "अभ्यासः खुरली योग्या" इति हारावली; भवाङ्कुर तुच्छतापसमुत, इति इति हेतोः, कुमारो मां भवाङ्कुर उक्तवान् इति हेतोरित्यर्थः, कुमारं स्कन्दमपि, का कथाऽन्येषामित्यपि-शब्दार्थः, आक्षिपन् निर्भर्त्सयन्, शिवाभ्यां पार्वतीपरमेश्वराभ्यां, कृतं शिवः अन्योऽन्यं, कूजितं यस्मिन् तत् यथा तथा, दृष्टोऽस्मि अवलोकितोऽस्मि, हा! खेदे, सोऽहं सम्प्रति घृणा जुगुप्सा, आत्मावमाननाविशेषः वा, तस्य हेतोः निन्दितः सन् इत्यर्थः, शिङ्कुमां यो गुरोर्धनुर्भङ्गापमानं सहे इत्यात्मानं विनिन्दामीति भावः, तस्य गुरोः, चापभङ्गमपि धनुर्भङ्गमपि, शृणोमि। वसन्ततिलकं वृत्तम् ॥ २४ ॥

(ख) रघुकुटुम्बकेन रघुपरिजनेन, रामेणेति यावत्। दूरम् अत्यर्थम्, उच्छ्वसितं प्रहृष्टमिति यावत्।

रे काकुत्स्था इति।—रे इति नीचसामन्त्रणम्; रे काकुत्स्थाः! तुच्छककुत्स्थ-कुलजाः क्षत्रियाः! दुःसामन्तस्य दुष्टनृपतेः, कार्त्तवीर्यस्येति भावः, अपचारेण अत्याचारेण, पितृवधरूपेण क्रूरकर्मणा इत्यर्थः, प्रचितः प्रवृद्धिं गतः, यः पितृवधामर्षः पितृविनाशजनितक्रोधः, शत्रुनिर्यातनेच्छा इति भावः, तस्मात् निस्तारे उद्धारे, शत्रु-निधनद्वारा अमर्षोच्छेदापने इति भावः, बन्धुः मित्रम्, वारानेकविंशान् विंशत्येकोप-रान्, एकविंशतिसङ्ख्याकान् इत्यर्थः, वारान् विशसितः निहतः, विषमक्षत्रजातेः दुष्टक्षत्रियजातेः, प्ररोहः अङ्कुरः, क्षुद्रशिशुरपि इति यावत् येन तथोक्तः, क्षत्रियशिशोरपि विनाशकारीत्यर्थः, तथा क्रोधात् उत्कृत्ताः खण्डिताः, ये गर्भाः भ्रूणाः, अपक्वशोणितानीति भावः, तेषाम् आमिषं मांसं, रुधिरं शोणितं, वसा मेदः, ताभिः विस्रगन्धिः आमगन्धिः, "मांसं क्रव्यमामिषम्" इति हारावली; "विस्रं स्यादामगन्धि यत्" इत्यमरः; भार्गवीयः भार्गवसम्बन्धी, अयं इत्यादिः,

रामः। (दृष्ट्वा सहर्ष-बहुमानम्)—

जेतारं दशकन्धरस्य रभसाद्दोःश्रेणिनिःश्रेणिका-
तुल्यारूढसमस्तलोकविजयश्रीपूर्य्यमाणोरसम्।
यः सङ्ख्ये निजघान हैहयपतिं शत्रोर्मुखं दृष्टवान्
यः पृष्ठं ददतोऽपि षण्मुखजये सोऽयं कृती भार्गवः ॥ २६ ॥

(चर्यां च निर्वर्ण्य सविस्मयम्)। अहो! सङ्कीर्य्यमाणानेकरसानुभावगम्भीरमधुरोऽयमस्याभोगः (ञ)। तथा हि।—

---

कुठारः अयं वः युष्माकं, श्रुतिपथं कर्णगोचरं, न अगमत्? न प्राप्नोत्? कथं श्रवणविषयतां न गतः? इत्यर्थः। स्रग्धरा वृत्तम् ॥ २५ ॥

जेतारमिति।—यः परशुरामः रभसात् वेगात्, बलपूर्वकमित्यर्थः, हर्षात् वा, उत्साहेनेति यावत्, "रभसो वेग-हर्षयोः" इत्यमरः; दोष्णां भुजानां, विंशतिसङ्ख्यकानामिति भावः, श्रेणिः पङ्क्तिरेव, निःश्रेणिका अधिरोहणी, सोपानपङ्क्तिरिति यावत्, "निःश्रेणिस्त्वधिरोहणी" इत्यमरः; तया तुल्यं समकालमेवेत्यर्थः, आरूढया ऊर्द्धमुत्थितया, समस्तलोकानां सर्वजगतां, विजयश्रिया विजयलक्ष्म्या, पूर्य्यमाणम् अधिष्ठीयमानम्, उरः वक्षःस्थलं यस्य तथाभूतस्य, त्रिभुवनविजयिन इति यावत्, दशकन्धरस्य रावणस्य, जेतारं जयकारिणं, हैहयपतिं कार्त्तवीर्य्यार्जुनं, सङ्ख्ये युद्धे, निजघान निहतवान्; "दोःश्रेणिनिःश्रेणिकातुल्यारूढसमस्तलोकविजयश्रीपूर्य्यमाणोरसम्" इति पाठे—दोःश्रेणिः भुजसङ्घमेव, निःश्रेणिका अधिरोहणी, तया तुल्यं युगपदित्यर्थः, आरूढया समस्तलोकविजयश्रिया पूर्य्यमाणम् उरः यस्य तथोक्तमिति हैहयपतिमित्यस्य विशेषणम्; यः षण्मुखस्य कार्त्तिकेयस्य, जये पराजये इत्यर्थः, पृष्ठं ददतोऽपि पराङ्मुखस्यापि, पलायमानस्यापीत्यर्थः, शत्रोः रिपोः, षण्मुखस्येति भावः, मुखं दृष्टवान्, कार्त्तिकेयस्य षण्मुखत्वेन पश्चादपि मुखस्थितेरिति भावः, सोऽयं कृती कुशली, कार्य्यदक्ष इत्यर्थः, भार्गवः परशुरामः, मया दृश्यते इति शेषः। शार्दूलविक्रीडितं वृत्तम् ॥ २६ ॥

(ञ) सङ्कीर्य्यमाणेति।—सङ्कीर्य्यमाणानां स्वयं विमिश्रीभवतां, विरुद्धानामपि एकत्र मिलितानामिति यावत्, कर्मकर्त्तरि प्रयोगः, अनेकरसानां विविधभावविशेषाणाम्, अनुभावेन आस्वादनेन, गम्भीरः दुरवगाहः, मधुरश्च। अस्य भार्गवस्य। आभोगः पूर्णता, अवयवसंस्थानमिति यावत्, "आभोगः परिपूर्णता" इत्यमरः।

